# अस्माकं महान् देशः सनातनी संस्कृतिः च ।

''ज्ञानस्य प्रथमकिरणाः कस्मिन् देशे उदिताः ?'' इति किं भवान् जानाति ?

''किं नाम जीवनम् ? मृत्युः नाम किम् ? जगतः सृष्टिः कथं जाता ? ग्रहान्, नक्षत्राणि, समस्तनभोमण्डलं च कः निर्मितवान् ? तथैव एते कस्य नियमम् अनुसरन्ति ?'' इत्यादीनां गूढविषयाणां ज्ञानं, कस्य देशस्य जनाः सर्वप्रयमं प्राप्तवन्तः ?

—आम् अस्माकं देशस्य प्राचीनाः ऋषिमुनयः एव एतत् ज्ञानम् अन्विष्टवन्तः। तत् स्वजीवने आयोजितवन्तः । ज्ञानस्य एषा मौखिकपरम्परा गङ्गा इव अस्माकं जीवने प्रवहन्ती आगता । आदिग्रन्थानां वेदानाम् उपनिषदां च रूपेण गौरवान्विता एषा परम्परा अद्यापि विराजते । ते च वेदाः- ऋग्वेदः यजुर्वेदः, सामवेदः, अथर्ववेदः च । काश्चन प्रमुखाः उपनिषदः- ईश-केन-कठ-प्रश्न-मण्डक-माण्डूक्य-तैत्तिरीय-ऐतरेय-छान्दोग्य- बृहदारण्यकादयः । एतत् च ज्ञानं भिन्नभिन्नकाले भिन्नभिन्नमुनिभिः अनुभूतं प्रकटितं च । विकीर्णम् एतत् ज्ञानम्, पञ्चसहस्रवर्षेभ्यः पूर्वं, वेदव्यासमहर्षिः सर्व-प्रथमतया सम्पादितवान्, तस्य सुव्यवस्थितम् आकारं दत्तवान् च ।

एतत् गूढज्ञानं सामान्यजनाः अवगन्तुं न शक्नुवन्ति स्म । एतत् ज्ञानं सामान्यजनानां जीवनस्य अपि मार्गदर्शकं भवतु इति दृष्ट्या अन्तिममनुः ''मनुस्मृतिं'' विरचितवान् । आदर्शसमाजस्य स्थापनार्थम् आवश्यकान् नियमान् न्यायविचारान् च प्रकाशयन् विराजमानः अपूर्वः ग्रन्थः एषः, अस्माकं सनातनसंस्कृतेः उपायनम् ।

अस्माकं महान् देशः, सनातनी संस्कृतिः, उभयम् अपि अभिमानास्पदम् । आगच्छन्तु, भारतीयाः वयं सर्वे अस्याः सम्पत्तेः रक्षणं कुर्मः, । तथैव ज्ञानगङ्गायां स्नात्वा पूताः भवामः ।



# चन्दमामा

सप्टम्बर् - १९८४

*

## अ न्त र ङ्ग म्




प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः'
सञ्चालकः 'नागिरेड्डी'

संस्कृतसम्भाषणसमये विविधाः जनाः मिलन्ति । तत्र केचन शास्त्रनिपुणाः पण्डिताः, केचन निरर्गलतया सम्भाषणं कर्तुं समर्थाः, अध्ययनकाले पठित्वा इदानीं विस्मृतवन्तः केचन, इदमिदानीं सम्भाषणं कर्तुम् आरब्धवन्तः केचन, वक्तुम् असमर्थाः चेदपि सम्भाषणं श्रोतुम् अत्युत्सुकाः केचन । एवं सर्वविधाः अपि जनाः मिलन्ति ।

पण्डितेन सह भवतु, सामान्येन सह वा भवतु, अस्माकं सम्भाषणं—सरलसंस्कृतेन । सम्भाषणव्रतं, तत्रापि सरलसंस्कृतस्य आश्रयणम्— इत्येतत् अस्माकं लक्ष्यं भवतु ।

सम्पुटः— १ सप्टम्बर्- ८४ सञ्चिका— ६

प्रतिकृतिमूल्यम् रू. २- * वार्षिकं ग्राहकशुल्कम् रू.२४-



# चन्दमामा प्रजल्पति



## निद्रातः जागरणार्थं गुलिकाः ।

"निद्राहीनानां कृते नीद्रागुलिकाः सर्वत्र उपलभ्यन्ते" इति तु सर्वैः ज्ञायते एव । किन्तु एषु दिनेषु जर्मनिदेशस्य एकया अनुसन्धान-प्रयोगशालया तादृशगुलिकाः निर्मिताः– याः निश्चिते समये जनान् जागरयन्ति ।

## द्वारपालकौ सिंहौ ।




इटलीदेशस्य नेपुलिसनगरस्य समीपे एकत्र सिंहशावकद्वयम् आपणस्य रक्षणं करोति । आपणिकः एतत् शिशुद्वयम् सर्कस् कम्पनीतः क्रीतवान् । प्रीत्या पालितवान् । एतौ सिंहशावकौ यजमानेन सह अन्यजनैः सह च प्रीत्या एव व्यवहरतः । तथापि आपणिकः आरक्षकैः आदिष्टः आस्ति– 'सिंहशावकौ शीघ्रम् एव प्राणिसंग्रहालयं प्रत्यर्पणीयौ' इति ।



## विनूतनः विक्रमः ।

पश्चिम-जर्मनीदेशस्य हेसिलञ्जन्नगरस्य अष्टमहिलाः उन्नत्या २.५ मीटरमितानां शलाकाकार-स्तम्भानाम् उपरि १२२ घण्टापर्यन्तम् उपविष्टवत्यः । एवं ताभिः अद्वितीयः विक्रमः साधितः ।

## भवन्तः जानन्ति वा ?

१. टेलिफोनयन्त्रम् केन आविष्कृतम् ?
२. कः विज्ञानी टेलिस्कोपयन्त्रम् निर्मितवान् ?
३. ग्रामाफोनयन्त्रस्य आविष्कारं कः विज्ञानी कृतवान् ?
४. ध्वनिवर्धकस्य (लौड् स्पीकर्) आविष्कारः केन कृतः ?
५. उरःश्रवयन्त्रस्य (स्टेतोस्कोप्) आविष्कारकः कः ?

(उत्तराणि ६४ तमे पृष्ठे)



# अर्हता

पूर्वं कोसलदेशस्य राजधान्याः समीपे एकम् अरण्यम् आसीत् । तत्र विमलानन्दनामकः मुनिः निवसति स्म । सः पाठप्रवचनादिना लोकोपकारं करोति स्म । तस्मिन् गुरुकुले इन्द्रजालपण्डिताः मीमांसकाः वैयाकरणाः च आसन् । कोसलदेशस्य राजा एव गुरुकुलस्य कृते आर्थिकसाहाय्यं करोति स्म । अध्यापकानां कृते वेतनादिकं यथाकाले महाराजः एव ददाति स्म ।

एकदा तस्मिन् गुरुकुले अभ्यासं कर्तुं नगरतः उभौ विद्यार्थिनौ आगतवन्तौ । एकः सुदासः । अपरः मोहनः । तौ विमलानन्द–स्वामिनं दृष्ट्वा स्वकीयम् उद्देशं निवेद्य आश्रमे अवकाशं प्रार्थितवन्तौ ।

तयोः निवासार्थं व्यवस्थां कृत्वा विमलानन्दः उक्तवान्–" किञ्चित्कालम् अत्र एव निवासः भवतु । भवतोः विद्यार्हतां विचार्य अनन्तरं यत्किमपि शास्त्रं पाठनीयम् । तदर्थं अल्पः कालः अपेक्षितः । तावत्पर्यन्तं गुरुकुलस्य नियमान् अनुसृत्य अत्रैव स्थीयताम्" इति । 'अस्तु' इति तौ अङ्गीकृतवन्तौ ।

एकः सप्ताहः अतीतः । एकस्मिन् दिने काष्ठानाम् आनयनकार्यं तयोः उपरि आपतितम् । सुदासः तथा मोहनः च परशुं गृहीत्वा अरण्ये शुष्कवृक्षम् अन्विष्य अटितवन्तौ । बहुदूरगमनानन्तरम् एकः वृक्षः दृष्टः ।

उभौ अपि मिलित्वा तस्य वृक्षस्य छेदनं कृतवन्तौ । अनन्तरं भोजनं कृत्वा किञ्चित्कालं विश्रान्तिम् अनुभूतवन्तौ । पुनः पतितं वृक्षं खण्डयितुं आरब्धवन्तौ । तस्य वृक्षस्य काण्डस्य मध्ये कोटरे सुवर्णनाण्यकानाम् एकः स्यूतः आसीत् । तावत् धनं दृष्ट्वा मोहनस्य नेत्रद्वयम् अपि कान्त्या प्रज्वलितम् ।

सः किञ्चित् विचार्य सुदासं प्रति "सुदास,



अद्य अस्माकं दारिद्र्यम् दूरं गतम्। एतानि नाण्यकानि विभज्य उभौ अपि स्वीकुर्वः। एतेन धनेन सुन्दरं गृहम्, विशालां भूमिं च क्रीत्वा बहुकालं सुखेन जीवितुं शक्यते। अस्मिन् अरण्ये महता कष्टेन विद्यार्जनं किमर्थं करणीयम् ? विद्यया अपि धनार्जनम् एव किल अस्माकं उद्देशः ? अतः एव एतत् धनं स्वीकृत्य ग्रामान्तरं गत्वा सुखेन जीवनं कुर्वः। गुरुकुलं प्रति गमनम् एव मास्तु।'' इति उक्तवान्।

सुदासः तस्य वचनं न अङ्गीकृतवान्। ''अहं विद्यार्जनं कर्तुं गुरुकुलम् आगतवान्। केवलं धनार्जनं विद्यायाः उद्देशः न। धनं सम्पादयितुम् अन्ये अपि मार्गाः सन्ति। विद्याविहीनाः अपि धनं सम्पादयन्ति। धनेन विद्याम् अर्जयितुं न शक्यते। किन्तु विद्यया धनं यशः च लभ्यते। विद्यया धनार्जनम् एव उचितम्। धनं कालान्तरे अस्मान् त्यजति, न तु विद्या। अतः एव ज्ञानिनः वदन्ति ''विद्याधनं सर्वधन-प्रधानम्'' इति। इदानीं वयं गुरुकुल-नियमानुसारं सर्वं धनं गुरूणां सन्निधाने समर्पयामः। आश्रमनियमाः अनुसरणीयाः खलु ? अन्यथा गुरूणाम् कोपपात्रं भवावः। अतः एव गुरूणां सन्निधाने सर्वं निवेदयावः। एतदेव साधु इति मम अभिप्रायः'' इति सुदासः उक्तवान्।

मोहनः सुदासस्य वचनं न अङ्गीकृतवान्। सः सर्वाणि सुवर्णनाण्यकानि गणयित्वा अर्धभागं कृत्वा सुदासस्य समीपे दत्वा, स्वकीयं भागं कोषे स्थापितवान्। अनन्तरं ''सुदास, अहं गृहं गच्छामि। भवान् गुरुकुलं गत्वा स्वेच्छया विद्यार्जनं करोतु। अहम् उपरोधं न करोमि। किन्तु मम कार्यं दुष्टम् इति अहं न चिन्तयामि'' इति उक्त्वा सः एकः एव गृहमार्गम् अनुसृत्य गतवान्।

मार्गे एकां नदीं तर्तुं सः प्रवृत्तः। किन्तु सः यदा पादं निक्षिप्तवान्, तदा केनापि जन्तुना दष्टः। तत्क्षणम् एव पादे महती वेदना आरब्धा। क्षणे क्षणे अपि वेदना वर्धते स्म।

भीतः मोहनः पादम् उपरि उद्धृत्य दृष्टवान्। पादं परितः एकः सर्पः वलयः इव

आक्रान्तः आसीत्। अस्य पादाघातेन दूरे पतितः सः कस्मिंश्चित् गह्वरे प्रविष्टः।

भीतः मोहनः तीरम् आगत्य पादं दृष्टवान्। तत्र सर्पस्य दन्तचिह्नम् आसीत्। तत् दृष्ट्वा सः प्राणभीत्या "हन्त! हन्त! अहं सर्पेण दष्टः! साहाय्यं कुर्वन्तु!" इति आक्रन्दनं कृत्वा मार्गे धावितुं आरब्धवान्।

मोहनः किञ्चिद्दूरं धावितवान्। मार्गे एकः अटविकः मिलितः। तस्य समीपं गत्वा मोहनः 'भोः! अहं सर्पेण दष्टः अस्मि। यत्किमपि औषधम् अस्ति चेत् दत्वा उपकरोतु' इति दीनस्वरेण प्रार्थितवान्।

तदा अटविकः उक्तवान्— "एवं वा? मम समीपे औषधम् अस्ति। सर्पविष-निवारणम् एव अस्माकं कुलकार्यम्। प्रथमं भवान् कोषे विद्यमानानि तानि सुवर्णनाण्यकानि मम कृते ददातु। अनन्तरम् एव अहम् औषधं ददामि। नो चेत्, न शक्यते।" इति।

'मम कोषे धनम् अस्ति इति एषः कथं ज्ञातवान्?' इति मोहनः आश्चर्यचकितः अभवत्। किन्तु चिन्तयितुम् अवकाशः न आसीत्। तस्य प्राणाः गच्छन्ति इव। अतः सः प्राण-रक्षणं प्रधानम् इति मत्वा सर्वं धनं दत्वा "यत्किमपि स्वीकरोतु, मम प्राणान् रक्षतु" इति उक्तवान्।

सः अटविकः अरण्ये कुत्रचित् गत्वा कानिचन पत्राणि आनीय, तैः रसं सङ्गृह्य पादस्य उपरि लेपनं कृतवान्। तम् एव रसं



किञ्चित् मुखे नासिकायाम् अपि स्थापितवान्। कमपि मन्त्रं कर्णे पठितवान्।

अनन्तरं मोहनस्य शरीरे सर्पदंशन-जातानि यानि चिह्नानि आसन् तानि सर्वाणि अपगतानि। अटविकः पुनः अरण्यं गतवान्।

'लब्धं सर्वं धनं विनष्टम्' इति मोहनः बहु दुःखम् अनुभूतवान्। सः किञ्चित् कालपर्यन्तं तत्रैव उपविश्य चिन्तितवान्। "अहम् इदानीं पुनः प्राथमिकीं स्थितिं प्राप्तवान्। अतः पुनः गुरुकुलं गत्वा विद्याभ्यासं करोमि" इति निश्चित्य कानिचन काष्ठानि सङ्गृह्य गुरुकुलं गत्वा गुरोः अग्रे स्थितवान्।

मोहनं दृष्ट्वा विमलानन्दमुनिः एवम् उक्तवान् "वत्स, मोहन! भवतोः परीक्षा कृता। तस्यां परीक्षायां सुदासः उत्तीर्णः। सः विद्याम् अभ्यसितुं समर्थः इति निश्चितम्। अतः सः अत्र एव तिष्ठति। भवान् विद्याभ्यासं कर्तुं योग्यः न इति सिद्धम् अभवत्। भवान् परीक्षायां अनुत्तीर्णः। अतः वृथा परिश्रमः मास्तु। गृहे सुखेन तिष्ठतु भवान्" इति।

गुरोः वचनं श्रुत्वा खिन्नमनस्कः मोहनः 'मया एव अपराधः कृतः' इति मत्वा प्रतिनिवृत्तः। मार्गे सः अटविकः तेन दृष्टः। सः वृक्षस्य अधः गुरुकुलस्य समीपे एव आसीत्। "अटविकः अत्र किं कार्यं करोति?" इति एकं विद्यार्थिनं पृष्टवान् मोहनः।

तदा विद्यार्थी उक्तवान्- "सः न अटविकः। अस्मिन् गुरुकुले सः ऐन्द्रजालपाठकः। अद्य भवतः परीक्षां कर्तुं तं वेषं धृतवान्" इति।

विद्यार्थिनः वचनं श्रुत्वा मोहनः स्वकीयं पादं पुनः दृष्टवान्। तत्र सर्पदंशनचिह्नमपि न आसीत्। 'आचार्यस्य ऐन्द्रजालेन सर्पदंशन-भ्रमः मयि उत्पादितः स्यात्' इति मोहनः चिन्तितवान्। विमलानन्दमुनेः परीक्षारीतिं ज्ञात्वा मोहनः मनसि महान्तं पश्चात्तापम् अनुभूतवान्।






[नाविकनायकः युद्धार्थं स्वदासान् दास्यमुक्तान् कृतवान्। किन्तु नाविकनायकस्य पीडाभिः उद्रिक्ताः दासाः विरोधम् आचरितवन्तः, नाविकनायकं मारितवन्तः च। अनन्तरं पिङ्गलः शत्रुनौकया स्वनौकां संघट्टितवान्। एतेन सर्वे समुद्रे पतिताः। पिङ्गलः अपि सुदूरे क्षिप्तः।]

समुद्रे पतितः पिङ्गलः किञ्चित् कालं जले मज्जितः। अनन्तरम् उपरि आगतवान्। तदा सः चतुर्दिक्षु स्वदृष्टिं प्रसारितवान्। 'नौकाद्वयम् अपि नष्टम् अस्ति। तयोः काष्ठ-खण्डानि समुद्रे प्लवमानानि सन्ति' इति सः दृष्टवान्। समुद्रे पतितानां नाविकानां आर्तनादः श्रूयते स्म।

समुद्रस्य तत् दृश्यं भीकरम् आसीत्। सर्वत्र विकीर्णाः काष्ठखण्डादयः तिमिङ्गिलाः इव दृश्यन्ते स्म। असहायाः असङ्ख्याः नाविकाः प्राणरक्षणार्थम् आर्तनादं कुर्वन्तः आसन्। किन्तु तत्सर्वम् अरण्यरोदनम् इव व्यर्थं जातम्। सर्वे आपदि पतिताः! कस्य रक्षणं कः करोति? एतत्सर्वं दृष्ट्वा पिङ्गलस्य मनः उद्विग्नम्।

समुद्रे भीकरतरङ्गाणां मध्ये पिङ्गलः तरणं



कुर्वन् आसीत् किल? अतः सः अतीव श्रान्तः। हस्तं पादं वा चालयितुम् अपि सः असमर्थः। समीपे कुत्रापि नौकादिकम् अपि न दृश्यते। अतः साहाय्यस्य आशा अपि नास्ति। बाहुबलं विश्वस्य तरणं कर्तुम् अपि तस्य धैर्यं नास्ति। यतः परितः अपारजलराशिं विना अन्यत् किमपि न दृश्यते!

एषा दुर्दशा केवलं पिङ्गलस्य एकस्य न। शत्रुजनाः मित्रजनाः सर्वेऽपि एतादृशे सङ्कटे पतिताः सन्ति। केचन एतावति काले एव मरणवशं गताः। अन्ये केचन मृत्युना युद्धं कुर्वन्तः सन्ति।

'कस्यां दिशि तरणं कृतं चेत् प्राणाः रक्षिताः भवेयुः?' इति पिङ्गलः चिन्तितवान्। अपरक्षणे अन्या एव आलोचना आगता– 'तरणम् अपि व्यर्थम् एव स्यात्। यतः कुत्रापि भूमिः न दृश्यते' इति। समुद्रस्य तरङ्गाः पिङ्गलम् इतस्ततः क्षिपन्तः पीडयन्तः सन्ति। मृत्युमुखं प्रविष्टाः यथा अधीराः भवन्ति तथैव आसीत् पिङ्गलस्य परिस्थितिः अपि। क्रमशः जीविताशा क्षीणा भवन्ती आसीत्। यथाशक्ति हस्तपादचालनं विना पिङ्गलस्य मनसि अन्यः उपायः न स्फुरति स्म।

पिङ्गलः एकघण्टापर्यन्तं जले मज्जन् उत्प्लवमानः च तरङ्गैः सह युद्धं कुर्वन् आसीत्। 'इतःपरं मरणम् निश्चितम् एव' इति चिन्तयित्वा सः निराशः। तावति काले जले प्लवमानस्य कस्यापि वस्तुनः स्पर्शः तेन अनुभूतः। सः झटिति स्वहस्ताभ्यां तत् वस्तु दृढं गृहीतवान्।

तदा पिङ्गलः 'दैवं भवन्तं सर्वदा रक्षति' इति मातुः वचनं स्मृतवान्। प्राणापाय-परिस्थितौ पतितः सः मातुः स्मरणेन पुनरपि खिन्नः। 'मम अनुपस्थितौ वृद्धायाः मातुः रक्षणं पोषणं च कः कुर्यात्? मातुः समीपे अपारां सम्पत्तिः दत्ता आसीत्। मन्त्रस्यूतः अपि तस्याः समीपे एव आसीत्। अतः भोजनादिविषये तु तस्याः समस्या नास्ति। किन्तु सहोदरौ न विश्वासार्हौ। कस्मिन् क्षणे ताभ्यां मातुः द्रोहः क्रियेत इति वक्तुं न शक्यते' इति सः चिन्तितवान्।

प्लवमानम् किञ्चित् वस्तु पिङ्गलेन दृढं गृहीतम् आसीत् किल ? तत् नौकायाः संघट्टनेन सुदूरं क्षिप्तं काष्ठफलकम् आसीत्। पिङ्गलस्य जीविताशा इदानीम् उज्जीविता। जले पतितस्य तृणसाहाय्यम् अपि महते लाभाय भवति किल ? सः मनसा एव देवाय हृत्पूर्वकं कृतज्ञताम् उक्तवान्। काष्ठफलकं समीपे आकृष्य तस्य उपरि अधोमुखं शयनं कृतवान्। 'समुद्रस्य तरङ्गाः कदाचित् मां कुत्रापि भूमिं प्रापयन्ति' इति तस्य मनसि आशा दृढा जाता। प्राणभय-कारणतः सः असहनीयां बुभुक्षां, शैत्यं सर्वम् अपि विस्मृतवान्।




काष्ठफलकं तु तरङ्गानां गत्यनुसारं प्लव–मानं मन्दं गच्छति स्म। पिङ्गलः तत् फलकं यथा हस्तच्युतं न भवेत् तथा सुदृढं गृहीतवान् आसीत्। भीतः सः 'परितः किं प्रचलति' इति ज्ञातुं प्रयत्नम् अपि न कृतवान्।

काश्चन घण्टाः अतीताः। पश्चिमे तीरे सूर्यः क्रमशः अस्तङ्गतः। अन्धकारः मन्दं मन्दं प्रसरति। पिङ्गलः एतत्सर्वं न ज्ञातवान् एव। यतः तस्य कर्णयोः केवलं समुद्रस्य निर्घोषः एव परिपूर्णः आसीत्। नेत्रयोः अनन्तनीलिमानं विना अन्यत् किमपि न प्रतिफलति स्म। शैत्यवशात् अङ्गानि काष्ठवत् जडानि आसन्।

पिपासया पिङ्गलस्य जिह्वा शुष्का जाता। अजानन् एव सः लवणमयं समुद्रजलं किञ्चित् पीतवान्। तदा उदरे पीडा आरब्धा। हस्त–पादं शिथिलीकृत्य सः फलकस्य उपरि एव शयनं कृतवान्। एकत्र पिपासा ! अपरत्र बुभुक्षा !! अन्यत्र आयासः प्राणभीतिः च !! अस्याम् एव अवस्थायां सः निद्रावशं गतः। बहुकालपर्यन्तं सः गाढनिद्रायां विलीनः आसीत्।

यदा पिङ्गलः नेत्रे उन्मीलितवान् तदा स्वच्छः नीलाकाशः दृष्टः। शरीरस्य उपरितनः भागः ज्वलति इव। अधस्तनभागः तु शैत्य–वशात् जडः। 'अहं कुत्र अस्मि ? कस्याम् अवस्थायां अस्मि ?' इति सः न ज्ञातवान्।

परिसरं परीक्षितुम् इच्छन् सः प्रयत्नेन नेत्रे उन्मील्य परितः दृष्टवान्। एकवारं सः




तदर्थं नेत्रयोः उपरि हस्तं संस्थाप्य सः सुदूरं दृष्टिं प्रसारितवान् ।

तदा तेन समीपे एव उड्डयमानाः गृध्राः दृष्टाः । ते सर्वे अन्यत्र गन्तुं प्रवृत्ताः इव न दृष्टाः । यतः ते वलयाकारेण एकत्र एव परिभ्रमन्तः अधः अवतरन्ति स्म ।

पिङ्गलस्य मनसि आशा उदिता । सः चिन्तितवान्— 'यत्र गृध्राः उड्डयनं कुर्वन्ति तत्र जनाः ग्रामः वा अवश्यं भवति एव' इति । अनया आलोचनया शरीरे नवस्फूर्तिः आगता । यस्यां दिशि गृध्राः दृश्यन्ते स्म, ताम् एव दिशम् उद्दिश्य सः मन्दं मन्दं चलितुम् आरब्धवान् ।

अल्पे एव काले पिङ्गलः तत् प्रदेशं प्राप्तवान् । तत्र भूमिम् आगताः ते गृध्राः किञ्चित् वस्तु आवृतवन्तः आसन् । हन्त ! तत् एकं मानवशरीरम् ! एतत् दृष्ट्वा पिङ्गलः भीत्या आश्चर्येण च रोमाञ्चितः ।

तत्र कश्चित् पुरुषः एकस्याः शिलायाः उपरि स्थापितः आसीत् । तस्य हस्तौ पादौ च बद्धाः आसन् । तस्य पुरुषस्य चलनवलनं किमपि न दृश्यते स्म । गृध्राः मांसस्य आशया तं परितः सम्मिलन्तः आसन् ।

एकक्षणं पिङ्गलः एतत्सर्वं दृष्टवान् । अनन्तरं समीपे स्थितम् एकं पाषाणं स्वीकृत्य गृध्राणाम् उपरि क्षिप्तवान् । एतेन केचन गृध्राः भीत्या आकाशम् उड्डयितवन्तः । अन्ये किञ्चित् दूरं

आश्चर्यचकितः, बहु सन्तुष्टः च । यतः तेन भूमिः प्राप्ता अस्ति । अहो ! आश्रयभूता दृढा भूमिः प्राप्ता !

भूमिं दृष्ट्वा पिङ्गलस्य शरीरे शक्तिसञ्चारः जातः । सः उत्साहेन हस्तपादं इतस्ततः चालितवान् । तदा जडभूतेषु अपि अङ्गेषु एकवारं चैतन्यम् आगतम् । सः सावधानतया उत्थातुं प्रयत्नं कृतवान् ।

भूमिं दृष्ट्वा एकवारं सन्तोषः जातः, सत्यम् । किन्तु सद्यः एव मनसि निराशा उत्पन्ना । एकत्र अपारः सागरः । अपरत्र विशाला मरुभूमिः ! इतःपरं का गतिः ?

पिङ्गलः उत्थाय स्खलन् द्वित्राणि पदानि अग्रे गतवान् । सूर्यकिरणाः नेत्रे पीडयन्ति स्म ।

गत्वा स्वकीयम् आहारं पश्यन्तः उपविष्टवन्तः। पिङ्गलः तस्य पुरुषस्य समीपं गतवान्। शरीरे नेत्रयोः वा कुत्रापि स्पन्दनं न दृश्यते। तथापि "प्राणाः भवेयुः" इति आशया पिङ्गलः तस्य वक्षस्थले हस्तं स्थापयित्वा परीक्षितवान्। हृदयम् अपि चलनरहितम् आसीत्। निश्चयेन सः पुरुषः मृतः एव!

"अस्यां मरुभूमौ कः केन कारणेन एतं पुरुषम् एवं क्रूररीत्या मारयित्वा गतवान्?" इति पिङ्गलः ऊहितुम् अपि न शक्तवान्। किन्तु तदा अन्यः एकः विचारः स्फुरितः– 'निर्जनायाम् अस्यां मरुभूमौ समीपे कुत्रापि जनवसतिः अवश्यं अस्ति एव। किन्तु जनाः स्वभावतः क्रूराः भवेयुः" इति।

"इदानीम् अग्रे किं करणीयम्?" इति पिङ्गलः बहुधा चिन्तितवान्। सर्वप्रथमं तु पिपासानिवरणार्थं जलम् अन्वेष्टव्यम्। अनन्तरम् आहारः अपि अन्वेष्टव्यः। जलेन आहारेण च विना मरणं भवेत्। मूर्छा तु भवति एव। तदा अत्रत्याः प्राणिनः आक्रमणं कृत्वा मारयेयुः। अतः आत्मरक्षणार्थं शक्तिः सम्पादनीया। एवं तर्हि जलार्थम् आहारार्थं च कुत्र गन्तव्यम्? सागरसदृश्यां मरुभूमौ कस्यां दिशि जनाः मिलेयुः? जनाः मिलिताः चेदपि ते दयापराः भवेयुः। अन्यथा दुर्गतिः एव शरणम्!



एवं समस्याभिः ग्रस्तः पिङ्गलः इतस्ततः पश्यन् आसीत्। तदा मरुभूमौ सञ्चारं कुर्वाणः कश्चित् उष्ट्रदलस्य नायकः दूरदर्शकसाहाय्येन पिङ्गलं दृष्टवान्। तथैव मृतं पुरुषं परितः उड्डयमानान् गृध्रान् अपि दृष्टवान्।

नायकस्य आज्ञानुसारम् उष्ट्रदलीयाः जनाः वेगेन पिङ्गलसमीपम् आगतवन्तः। उष्ट्राणां वेगगत्या सर्वत्र धूलिः व्याप्ता।

दूरे उत्पद्यमानां धूलिं दृष्ट्वा पिङ्गलः एकक्षणं चकितः। यदा उष्ट्रदलं समीपे आगतं, तदा सः वस्तुस्थितिं ज्ञातवान्। तान् जनान् दृष्ट्वा तस्य मनसि उत्साहः। किन्तु ते लुण्ठाकाः चेत् किं करणीयम् इति भीतिः।

कुत्रापि निलीनः भवितुम् अपि मरुभूमौ तत्र




गुप्तस्थलं किमपि नास्ति। अस्ति चेदपि धावितुं शक्तिः अपि नास्ति। वस्तुतः सः इदानीम् एकं पदम् अपि चलितुं न समर्थः।

उष्ट्रदलं पिङ्गलस्य समीपम् आगत्यस्थितम्। नायकस्य आज्ञानुसारं सर्वे उष्ट्रात् अवतीर्य पिङ्गलं परितः स्थितवन्तः। मौनेन स्थितं पिङ्गलं पश्यन् उष्ट्रदलस्य नायकः गम्भीरस्वरेण पृष्टवान्–'अये, भवान् मरुभूमिचोरस्य भैरवस्य अनुचरः न किल'? इति।

अनन्तरं मृतं पुरुषं समीपतः पश्यन् सः स्वसहचरान् उद्दिश्य उक्तवान्–'मृतः एषः अस्मदीयः एव दुर्गरक्षकः। अन्ये कुत्र गताः? अस्मदीयं दुर्गं भैरवस्य वशंगतं न स्यात् किल?'' इति।

एतन्मध्ये उष्ट्रदलीयः कश्चित् सैनिकः शूलं पिङ्गलस्य पृष्ठे स्थापयित्वा गर्जितवान् - ''सत्यं वदतु, भवतः नायकः भैरवः कुत्र अस्ति?'' इति।

पिङ्गलः अस्य प्रश्नय अर्थम् एव न ज्ञातवान्। प्रायः भैरवनामकः पुरुषः लुण्ठकजनानां नायकः स्यत्। एवं चेत् एते के? किं सैनिकाः उत देश-विदेशं सञ्चरन्तः वणिजः?

एवं चिन्तयित्वा पिङ्गलः उक्तवान् ''अहं यस्य कस्यापि पक्षस्य सम्बन्धी न। अहं कश्चित् हतभाग्यः जनः। झञ्झावातकारणतः अस्माकं नौका समुद्रे भग्ना। भगवतः कृपया अहं जीवितः, एतत् तीरं प्राप्तवान् च। अहं दूरतः एतं मृतपुरुषं दृष्टवान्। कदाचित् जीवितः स्यात् इति चिन्तयित्वा रक्षणार्थम् आगतवान्। एषा मरुभुमिः का? एषः कः देशः। इत्यादिकम् अहं किमपि न जानामि'' इति।

एतत् श्रुत्वा उष्ट्रदलस्य नायकः पुनः एकवारं पिङ्गलं परीक्षादृष्ट्या पश्यन् उक्तवान्–'' भवतः वचनं सत्यम् अस्ति चेत् भीतिः मास्तु। किन्तु भवतः वचनम् असत्यं चेत्, व्यवहारः कपटतापूर्णः चेत्, सद्यः एव भवान् गृध्राणाम् आहारः भविष्यति। इदानीं भवान् यत्र अस्ति, सः एषः प्रदेशः आफ्रिका समुद्रतीरे स्थितः अरबप्रदेशः। अहं

महाराजस्य उष्ट्रदलस्य नायकः। इदानीं भवान् निर्भयेन - 'भवतः नौका कथं भग्ना? भवान् कथम् अत्र आगतः' इत्यादिकं वदतु'' इति।

एते जनाः न लुण्ठाकाः, अपितु राजपक्षीयाः इति ज्ञात्वा पिङ्गलस्य महान् सन्तोषः जातः। महाराजस्य तत्पक्षीयाणां च स्वभावः यथाकथम् अपि भवतु नाम, इदानीं मरणभीतिः तु दूरं गता। अतः सः चिन्तितवान् - 'अहं मदीयां सर्वां कथां वदामि। अग्रजयोः नाविकनायकस्य वञ्चनां वदामि चेत् एते विश्वसन्ति' इति।

पिपासाकारणतः पिङ्गलस्य मुखं शुष्कम् अस्ति। अतः सः किमपि वक्तुं न शक्नोति-स्म। तदर्थम् एकेन सैनिकेन दत्तं जलं पीत्वा सः, नाविकनायकेन कृतां वञ्चनां, शत्रूणाम् आक्रमणं, नौकायाः नाशं, सर्वं सविस्तरम् उक्तवान्।

तदा सः सेनानायकः तृप्तिं प्रकटयन् पुनरपि पृष्टवान्– 'तर्हि एतत् तु सत्यं यत् आक्रमणकारिणां नौकायाम् अपि दासाः आसन्' इति।

'आम्, तत्र संशयः एव नास्ति। अहं यदा आक्रमणकारिभिः सह सन्धिं सम्पादयितुं सम्भाषणं कृतवान्, तदा तेषाम् उत्तरेण ज्ञातं यत् साऽपि नौका दासविक्रेतृणाम् इति। अतः एव ते मया सह सन्धिं निराकृतवन्तः' इति।

एतत्सर्वं सत्यम् इति अङ्गीकुर्वन् सेनानायकः




उक्तवान्– ''मम नाम हसन् गोरी। भवान् अपि अनेकेषु युद्धेषु नायकत्वं निरूढवान्। अतः भवान् मां नाम्ना एव आह्वातुं शक्नोति। भैरवनाथनामकः कश्चित् लुण्ठाकः अत्र अस्ति। तं नाशयितुं वयं सर्वे अत्र मरुभूमौ सञ्चारं कुर्वन्तः स्मः। एषः मृतः पुरुषः अपि अस्मदीयः एव। सः अस्यां मरुभूमौ स्थितस्य एकस्य दुर्गस्य रक्षकेषु अन्यतमः आसीत्। भैरवः एतं कथं बन्दिनं कृतवान् इति अहं न जानामि। दौर्भाग्यवशात् दुर्गं भैरवस्य वशे आगतं स्यात् वा? इति मम संशयः'' इति।

अनन्तरं सैनिकान् उद्दिश्य सः उक्तवान्- ''एतत्क्षणात् आरभ्य एषः अपि अस्मासु एकः। मन्दभाग्यः एषः बुभुक्षितः अस्ति। अतः

प्रथमं भोजनार्थं पानार्थं च व्यवस्थां कुर्वन्तु। प्रथमम् एष: किञ्चित् बलं प्राप्नोतु'' इति।

हसनस्य वचनं श्रुत्वा पिङ्गल: आनन्द-तुन्दिल: अभवत्। सैनिका: खादनार्थं रोटिका: आनीय, पिङ्गलस्य पुरत: प्रीत्या आदरेण स्थापितवन्त:। पातुं मधुरं जलम् एकेन कुम्भेन आनीय पिङ्गलस्य हस्ते दत्तवन्त:। बुभुक्षित: च पिङ्गल: रोटिका: मधुरं जलं च दृष्ट्वा अतीव सन्तुष्ट: अभवत्। देवं मनसा एव अभि-वन्दितवान्। अहो! देवस्य गति: विचित्रा इति मनसि एव पुन: पुन: उक्तवान्। सद्य: काले तु एष हसन: एव मम देव: इति तम् अपि मनसा अभिनन्दितवान्। अनन्तरं स: सैनिकै: दत्तम् आहारं खादित्वा जलं यथेष्टं पीतवान्। तत: उत्साहित: स: प्रयाणार्थं सिद्ध: अभवत्।

तदा हसन् गोरी एकम् उष्ट्रं प्रदर्श्य पिङ्गलम् उक्तवान्— ''इत: परं एष: उष्ट्र: भवत: वाहनम्। वयम् इदानीम् इत: गच्छाम:। भैरव: दुर्गं वशीकृतवान् वा ? इति मम संशय:।''

अनन्तरं स: एकं सैनिकम् आज्ञापितवान् ''एतं शवम् उष्ट्रस्य उपरि स्थापयन्तु। अस्म-दीय: शव: गृध्राणाम् आहाराय न भवेत्'' इति।

सैनिका: शवं एकस्य उष्ट्रस्य उपरि स्थापि-तवन्त:। स: शव: गमनसमये पतित: भवेत् इति अपर: उष्ट्रम् आरुह्य शवं हस्तेन गृही-तवान्। अन्ये सर्वे अपि स्वीयान् उष्ट्रान् आरूढवन्त:। पिङ्गल: अपि एकेन सैनिकेन आनीय दत्तम् उष्ट्रम् आरूढवान्। एवं सर्वे अपि प्रयाणार्थं सिद्धा: अभवन्।

शीघ्रम् एव तत् दलं तत: प्रस्थितम्। ते सैनिका: मरुभूमौ कष्टेन प्रयाणं कुर्वन्त: सूर्यास्त- समये दुर्गस्य समीपम् आगता:। यत्र सर्वेषां जनानां गमनागमनम् अविरतं दृश्यते स्म तत्र इदानीं भीकरं मौनं व्याप्तम् अस्ति।

हसन्गोरी परिवृत्य दृष्ट्वा भृकुटिम् आकु-ञ्चयन्, दुर्गस्य दिशि हस्तं प्रदर्शितवान्।

( अनुवर्तते )






# कनकसुन्दरी

विघ्नशतैः बाधितः अपि त्रिविक्रमः स्वीकृतं कार्यं न त्यक्तव्यम् इति निश्चित्य आग्रहवन्तं वेतालं ग्रहीतुं पुनः वृक्षस्य समीपम् आगतवान् । वृक्षस्य शाखायां लम्बमानं शवं अंसे आरोप्य मौनं श्मशानभिमुखं गतवान् । तदा शवान्तर्गतः वेतालः "भोः, महाराज ! भवान् बहु आग्रहेण कार्यं कुर्वन् एतादृश रात्रौ कष्टम् अनुभवति । एतत् सर्वं भवान् परहितार्थं न करोति, किन्तु भवतः अनुकूलार्थम् एव करोति इति चिन्त–यामि । किन्तु प्रतिकूल-परिस्थित्यां केचित् स्व-प्रतिज्ञां त्यजन्ति । द्विषन्तम् अपि जनं विनयेन आश्रयन्ति । उदाहरणार्थं कनकसुन्दर्याः कथां शृणोतु" इति कथाम् आरब्धवान् ।

जस्वन्तराज्ये कुलदीपः नाम राजा धर्मेण प्रजाः पालयन् आसीत् । तस्य सचिवः सुकीर्तिः नाम । सः सुकीर्तिः बहु बुद्धिमान् । राजकार्यं सर्वं सुकीर्तेः सूचनानुसारेण एव राजा

## वेतालकथा



करोति स्म । सुकीर्तेः विषये राज्ञः विश्वासः आदरः च आसीत् ।

गच्छति काले, कुलदीपः वृद्धः रोगग्रस्तः च अभवत् । अतः सः राजा स्वस्य मरणम् आसन्नं ज्ञात्वा, कुमारस्य मणिदीपस्य राज्याभिषेकं कृतवान् । ततः पुत्रस्य समीपे "भवान् सचिवस्य सुकीर्तेः वचनानुसारेण एव राज्यं परिपालयतु । सः बहु बुद्धिमान् । राज्यविषये ममापेक्षया तस्य एव अधिकः अनुभवः अस्ति । तेन तिरस्कृतं कार्यं न करणीयम्" इति उक्त्वा राजा मृतः ।

मणिदीपः पितुः वचनानुसारेण सुकीर्तिम् एव मन्त्रित्वेन स्वीकृतवान् ।

एकदा प्रतिवेशिराज्यस्य राज्ञः जयपालस्य विषये मणिदीपस्य संशयः समुत्पन्नः । अतः सुकीर्तिसमीपे—"सः जयपालः गच्छता कालेन इतोऽपि बलवान् भविष्यति । वयं तूष्णीं भवामः चेत् सः प्रबलः भवति । अतः इदानीमेव युद्धं घोषयामः । अस्मिन् विषये भवतः अभिप्रायः कः ?" इति मणिदीपः पृष्टवान् ।

सुकीर्तिः किञ्चित् आलोच्य उक्तवान्- "महाराज ! कृपया एतं प्रयत्नं त्यजतु । इदानीं युद्धं मास्तु ।" मणिदीपः बहु आश्चर्येण पृष्टवान् "भवान् किमर्थम् एवं वदति ?"

"भवान् राज्याकाङ्क्षया युद्धं करोति । प्रयत्नः सफलः न भवति चेत् तदा बहु नष्टं भवति । अतः इदानीं युद्धं मास्तु" इति उक्तवान् सुकीर्तिः ।

मणिदीपाय एषा सूचना न अरोचत । किन्तु "सः सचिवः अनुभवी, धीमान् च, तस्य सूचना न तिरस्करणीया" इति पितुः वचनं स्मृत्वा अनिच्छन् अपि युद्धप्रयत्नं सः त्यक्तवान् ।

ततः कतिपय-दिनानन्तरम् एकदा मृगयाविहारार्थम् अरण्यं गन्तुं राजा सिद्धः ।

सुकीर्तिः तत् ज्ञात्वा राज्ञः समीपम् आगत्य 'राजन् ! अद्य मृगयाविहारार्थं गमनं नोचितम् । दिनद्वयानन्तरं गच्छतु' इति निरोधं कृतवान् ।

तत् श्रुत्वा राजा बहु निरुत्साहेन "अनाहूतः अपि भवान् आगत्य किमर्थं 'न गन्तव्यं' इति

वदति ? कारणं वदति चेत् समीचीनम्'' इति पृष्टवान् ।

"अद्य वृष्ट्याः लक्षणम् अस्ति । अरण्यगमनानन्तरं यदि वृष्टिः आगच्छति तदा तत्र मण्डपादिकम् अपि नास्ति । अपि च मृगयाविहारार्थम् एषः वर्षाकालः न अनुकूलाय भवति । 'गन्तव्यमेव' इति मनसि अस्ति चेत् दिनद्वयानन्तरं गमनम् उचितम् । अद्य वृष्टिः भवेत् चेत् पुनः शीघ्रम् एव वृष्टिः न भविष्यति'' इति सुकीर्तिः उक्तवान् ।

मणिदीपस्य बहु निरुत्साहः जातः । तथापि सुकीर्तेः सूचनानुसारं मृगयाविहारं स्थगितवान् ।

तद्दिने वृष्टिः न अभवत् । आकाशे तत्र तत्र मेघाः सञ्चरन्ति स्म ।

मणिदीपः सुकीर्तिम् आहूय ''भवान् अत्युत्साहेन मृगयाविहारार्थं गच्छन्तं मां निरुद्धवान् । किन्तु वृष्टिः न अभवत्'' इति उक्तवान् ।

सुकीर्तिः विहस्य उक्तवान्– ''महाराज ! अस्माकं राजधान्यां वृष्टिः न अभवत् । किन्तु अरण्ये महती वृष्टिः अभवत् एव इति मन्ये । अहं मेघस्य वायोः च लक्षणं सर्वं जानामि ।''

मणिदीपः सन्देहनिवारणार्थम् अरण्ये दृष्ट्वा आगन्तुं कांश्चन भटान् प्रेषितवान् । भटाः आगत्य ''अरण्ये बहु वृष्टिः अभवत् । सर्वम् अरण्यं जलमयं जातम् । अपि च इदानीम् अपि वृष्टिः वर्षन्ती एव अस्ति', इति उक्तवन्तः ।

मासद्वयम् अतीतम् । एकस्मिन् दिने वृद्धः



सुकीर्तिः मणिदीपस्य समीपम् आगत्य ''महाराज ! प्रतिवेशिराज्यस्य राजा जयपालः इदानीं बहु बलशाली अस्ति । अपि च सः युद्धार्थम् आगच्छेत् । अतः इदानीं यः कोऽपि निर्णयः स्वीकरणीयः'' इति उक्तवान् ।

एतत् वचनं श्रुत्वा बहुकोपयुक्तः मणिदीपः ''एवं वा ? पूर्वम्, अहमेव युद्धार्थं गच्छामि इति यदा उक्तवान्, तदा मास्तु इति भवता उक्तम् । इदानीं सः एव आगच्छति इति वदति । इदानीं वयं युद्धं कुर्मः चेत् नष्टं न भवति वा ?'' इति पृष्टवान् ।

सुकीर्तिः शान्तस्वरेण ''भवतः वचनं सत्यम् एव । जयपालः युद्धं करोति चेदपि नष्टम् । वयमेव गच्छामः चेदपि नष्टं भवति एव'' इति



वाक्यं स्थगितवान् ।

तदा मणिदीपः आश्चर्येण सुकीर्ति ''तर्हि 'युद्धं मास्तु । शरणागताः भवामः' इति वदति वा भवान् ? जयपालस्य वयं माण्डलिकाः भवामः इति भवतः इच्छा वा ?'' इति पृष्टवान् ।

''मम अभिप्रायः एवं न । जयपालस्य सैनिकबलं बहु अस्ति । तादृशराजेन सह युद्धापेक्षया बन्धुता-सम्पादनं बहु समीचीनम् । जयपालस्य बुद्धिमती प्राप्तवयस्का च एका पुत्री अस्ति । सा भवतः अनुरूपा इति मम भावना । अतः भवतोः यदि विवाहः भविष्यति तदा वयम् एव उत्कृष्टाः भवामः । जयपालः नाङ्गीकरोति चेत् तदा युद्धम् अनिवार्यम् एव'' इति सुकीर्तिः सूचितवान् ।

'जयपालस्य कनकसुन्दरी नाम एका पुत्री अस्ति । सा बहु रूपवती, बुद्धिमती च' इति वार्ता मणिदीपः अपि श्रुतवान् । तां परिणेतुम् इच्छा अपि तस्य मनसि आसीत् । अतः सुकीर्तेः सूचनां सः अनुमोदितवान् ।

तत् श्रुत्वा जयपालस्य महान् आनन्दः जातः । सः पुत्र्याः समीपे एतं विचारम् उक्त्वा 'भवत्याः अभिप्रायः कः ?' इति तां पृष्टवान् ।

कनकसुन्दरी किञ्चित् आलोच्य 'तात ! भवान् जम्बन्तराज्यं प्रति युद्धार्थं सिद्धतां कृतवान् । एतादृशसमये विवाहविषयः किमर्थम् ?'' इति पृष्टवती ।

''तरुणः मणिदीपः यदा कदा वा युद्धार्थम् आगच्छति इति मम संशयः आसीत् एव । अतः वयम् एव पूर्वं गच्छामः इति मया निश्चितम् । किन्तु सः मणिदीपः यदि मम जामाता भविष्यति तदा सन्तोषः एव । अपि च सः भवत्याः अनुरूपः । इदानीं कापि वैरभावना नास्ति'' इति उक्तवान् जयपालः ।

''भवान् युद्धार्थम् आगच्छति इति वार्तां श्रुत्वा एव सः विवाहविषये सूचनां प्रेषितवान् स्यात् । अतः किञ्चित् आलोच्यताम् । अस्मिन् विषये किमपि कापट्यं स्यात्'' इति कनकसुन्दरी उक्तवती ।

जयपालः किञ्चित् आलोच्य उक्तवान्— ''तस्य राज्ञः सचिवः सुकीर्तिः बहु बुद्धिमान् ।

राज्यविषये तत्समानः कोऽपि नास्ति । अतः एषः विवाहविषयोऽपि सुकीर्तेः आलोचनानुसारेण एव प्रस्तुतः इति मन्ये। सुकीर्तिः यथा राजकीयव्यवहारे चतुरः, तथैव सज्जनः अपि । अतः अत्र काऽपि वञ्चना नास्ति इति मम भावना ।''

कनकसुन्दरी– ''सत्यम् । किन्तु राजा मणिदीपः सुकीर्तेः अनुमतिं विना मृगयार्थमपि न गच्छति इति वार्ता श्रुता । विवाहनन्तरमपि एवमेव तस्य सूचनानुसारेण मामपि त्यजेत् । अतः 'तं सुकीर्तिं देशात् उच्चाटनं करोति चेत् अहं मणिदीपं परिणेष्यामि' इति एकां सूचनां भवान् दूतमुखात् प्रेषयतु'' इति उक्तवती ।

जयपालः तथैव कृतवान् । एतेन मणिदीपस्य महान् कोपः उत्पन्नः । दन्तान् निष्पीडयन् ''जयपालस्य कियान् गर्वः ? अहं अद्य एव जयपालस्य उपरि आक्रमणं करोमि । जयपालं पराजित्य कारागारे स्थापयिष्यामि । कनकसुन्दरीं मम दासीं करिष्यमि'' इति कोपेन उक्तवान् मणिदीपः ।

सुकीर्तिः शान्तस्वरेण ''महाराज ! मनः शान्तं भवतु । मम पूर्वजाः प्रसेनराज्ये वसन्ति । अतः अहमपि तत्रैव गत्वा जीवनं यापयामि । आज्ञां ददातु'' इति उक्तवान् ।

''नैव, भवन्तं न त्यजामि । भवान् सचिवस्थाने अत्रैव भवतु । अस्मिन् विषये अहं भवतः



सूचनां तिरस्करोमि ।

वस्तुतः पूर्वम् एव मया आक्रमणं करणीयम् आसीत् । भवतः वचनानुसारं तूष्णीं स्थितवान् । इदानीं पश्यतु, तेषाम् औद्धत्यम् ! प्रायः माम् असमर्थं चिन्तयन्ति ते । अतः अहम् एकवारं मम बाहुबलं प्रदर्शयामि एव ।

एतावत्पर्यन्तम् अहं भवतः वचनानि सर्वाणि परिपालितवान् । इदानीं तु एषः मम गौरवस्य प्रश्नः । अतः युद्धविषये अन्यथा मा वदतु'' इति मणिदीपः उक्तवान् ।

कतिपयदिनानन्तरं मणिदीपः जयपालेन सह युद्धार्थं गतवान् । किन्तु जयपालः युद्धम् अकृत्वा सन्धिं च कृत्वा, स्वस्य पुत्रीं कनकसुन्दरीम् मणिदीपाय दत्वा विवाहं कारितवान् ।

वेतालेन एवं कथां समाप्य उक्तम्-"राजन्! कनकसुन्दर्याः वर्तनम् अनुचितं किल? सा पूर्वं किम् उक्तवती? अनन्तरं किम् अभवत्? सुकीर्तेः देशोच्चाटनं विना अहं न परिणेष्यामि इति पूर्वम् उक्तवती। अनन्तरं सन्धिः कृत्वा परिणीतवती।

परिणयस्य कारणं तु मम कष्टम् आपतितम् इति तस्याः भावना किल स्यात्? अतः सा अङ्गीकृतवती इति मन्ये। एतेषां सन्देहानां उत्तरं भवान् न वदति चेत् भवतः शिरः भग्नं भवति!" इति।

त्रिविक्रमः उत्तरितवान्– "कनकसुन्दर्याः वर्तने किमपि अनुचितं नास्ति। मणिदीपः सुकीर्तेः सूचनां विना किमपि कार्यं कर्तुम् असमर्थः इति कनकसुन्दरी जानाति। सर्वदा सुकीर्तेः सूचनानुसारेण एव सर्वं करोति चेत् तादृशः राजा अस्वतन्त्रः भवति। कालक्रमेण तादृशस्य राज्ञः आलोचनाशक्तिः एव अपगच्छति। सः पराधीनः अपि भवेत्। मणिदीपे स्वतन्त्ररूपेण आलोचना शक्तिः अस्ति वा न वा इति परीक्षितुम् एव कनकसुन्दरी 'सचिवस्य देशोच्चाटनादण्डनं ददातु' इति उक्तवती। अस्मिन् विषये मणिदीपः स्वयमेव आलोचनां कृत्वा सचिवं न त्यक्तवान्। अनया परीक्षया मणिदीपास्य स्वयम् आलोचनाशक्ति अस्ति, अपि च स्वस्मै न रोचते चेत् सूचनां तिरस्करोति इत्यपि ज्ञातम्।'

अस्याः परीक्षायाः कनकसुन्दर्याः निर्भयता एव कारणाम्। तस्याः परीक्षायां मणिदीपः विजितवान्। अतः एव सन्धि कृत्वा मणिदीपम् एव परिणीतवती।"

एवम् उक्त्वा त्रिविक्रमः मौनम् आश्रितवान्। तदा वेतालः झटिति शवसहितः अदृश्यः भूत्वा शाखाम् अवलम्बितवान्।





# स्पर्धा

एकः ग्रामः । तत्र वीरभद्रः नाम गृहस्थः आसीत् । मर्वदा सः पत्न्या सह स्पर्धां करोति स्म । एकस्मिन् दिने सः पत्नीम् उक्तवान्- मोः ! अहं बहिः गच्छन् अस्मि । यावत् वा कष्टं भवतु, प्रातः कालात् पूर्वं गृहम् आगच्छामि एव' इति ।

परन्तु रात्रौ सञ्चारं कर्तुं तस्य धैर्यं नास्ति इति पत्नी जानाति । सा उक्तवती– 'किमर्थं व्यर्थं जल्पति ? अहं जानामि यत् रात्रौ भवान् न आगच्छति'' इति ।

''भवती मां किं जानाति ? सर्वदा मम कथनस्य विरुद्धम् एव कथयति भवती । पश्यतु, प्रातःकालात् पूर्वम् अहं गृहम् आगच्छामि एव'' इति उक्तवान् वीरभद्रः ।

''इदानीं किमर्थं विवादः ? समये आगच्छतु, पश्यामः'' इति उक्त्वा हसितवती तस्य पत्नी ।

पतिपत्न्योः मध्ये एवं वादविवादः सर्वदा प्रचलति स्म । विवादे सर्वदा पत्न्याः एव विजयः भवति स्म । अतः वीरभद्रस्य महान् कोपः । अस्यां स्पर्धायां तु मया एव जयः प्राप्तव्यः इति वीरभद्रः निश्चयं कृतवान् ।

सः ग्रामतः प्रस्थितः । तदा एव तस्य एकः स्नेहितः तेन एव मार्गेण आगतवान् । वीरभद्रः तं पृष्टवान्– ''जगन्नाथः किल ! कुतः आगच्छति ? का वार्ता?'' इति ।

''आम्, अहं जगन्नाथः एव ! भवान् कुत्र गच्छति ?'' सः पृष्टवान् । ''महोपाध्यायस्य गृहं गच्छामि '' वीरभद्रः उक्तवान् ।

''एवं वा ? अहं तस्य गृहतः एव आगच्छन् अस्मि । महोपाध्यायः इदमिदानीं कार्यार्थं राजधानीं गतवान् । एतं विषयं सूचयितुम् एव अहम् आगतवान्'' इति जगन्नाथः उक्तवान् ।

"एवं वा ? तर्हि समीचीनम्" इत्युक्त्वा वीरभद्रः ततः स्वमित्रस्य गोविन्दस्य गृहं गतवान् । गोविन्दम् एतं विषयं निवेदितवान् ।

"तर्हि पुनः यदा कदापि महोपाध्यायं पश्यतु । अद्य तु गृहं गच्छतु"-- गोविन्दः उक्तवान् ।

"तथा न शक्यते । मया पत्न्या सह स्पर्धा कृता अस्ति । अद्य तु मया एव विजेतव्यम् । अतः इदानीं भवतः गृहे एव तिष्ठामि । श्वः प्रातः गृहं गमिष्यामि"- इति उक्तवान् वीरभद्रः ।

गोविन्दः उक्तवान्–"तथैव अस्तु" । अनन्तरं तौ पत्रक्रीडां क्रीडितुम् आरब्धवन्तौ । अन्ये स्नेहिताः अपि आगतवन्तः । सर्वे मिलित्वा अर्धरात्रपर्यन्तं पत्रक्रीडां क्रीडितवन्तः । क्रीडन्तः एव गाढं निद्रितवन्तः ।

यदा ते निद्रातः उत्थितवन्तः तदा मध्याह्नसमयः आसीत् । गोविन्दः वीरभद्रम् उक्तवान्- "भोः मित्र ! इदानीम् अपि स्पर्धायां भवतः पत्न्याः एव जयः भवति, यतः भवान् मध्याह्ने एव गृहं गच्छति, न तु रात्रौ" इति ।

"न, अहं रात्रौ एव गृहं गच्छामि"- वीरभद्रः निश्चयेन उक्तवान् । सः रात्रिपर्यन्तं तत्रैव स्थित्वा रात्रौ गृहं प्राप्तवान् ।

तं दृष्ट्वा पत्नी उक्तवती– 'अन्ततो गत्वा अहं यथा उक्तवती तथैव अभवत्" इति ।

"कथं तथा भवति ? अहं तु रात्रौ एव गृहम् आगतवान् ! न तु दिवा । ह्यः न आगतवान् चेदपि अद्य वा रात्रौ एव आगतवान् किल । अतः स्पर्धायां मम एव जयः–" वीरभद्रः उक्तवान् ।

"अस्तु, तथैव अस्तु । तदर्थं मया किं करणीयम् ?" पत्नी पृष्टवती । वीरभद्रः उक्तवान् 'किमपि नास्ति । "अहम् एव पराजिता' इति अङ्गीकरोतु"

"भवतः सन्तोषः एव मम सन्तोषः । अतः अवश्यम् भवतः सन्तोषार्थम् पराजिता भवितुम् अहं सर्वदा सिद्धा एव" इत्युक्त्वा हसितवती तस्य पत्नी ।






# विवेकः

चित्रपुरग्रामस्य ग्रामाधिकारी प्रभाकरश्रेष्ठी । तस्य एका प्रवृत्तिः आसीत् । सः जनान् आहूय काश्चन लघु-परीक्षाः आयोजयति स्म । तत्र सफलतां ये प्राप्तवन्तः, तेषां कृते पारितोषिकाणि ददाति स्म । एतेन स्वयं सन्तोषम् अनुभवति स्म ।

एकदा तस्य मनसि एकः विचारः उत्पन्नः "मम ग्रामे ज्ञानवान् वीवेकी च कः अस्ति इति ज्ञातव्यम्" इति ।

प्रभाकरश्रेष्ठी बहून् जनान् पृष्टवान्— "अस्माकं ग्रामे अत्युत्तमः विवेकी कः अस्ति? " इति ।

तदा सर्वे एकम् एव उत्तरं वदन्ति स्म— "एषः अल्पः विषयः अपि भवता न ज्ञातः वा ? रामं भीमं सोमं च अतिरिच्य अन्यः विवेकी कोऽपि नास्ति" इति । एतेन ग्रामाधिकारिणः कार्यं सुलभं जातम् ।

एकस्मिन् दिने ग्रामाधिकारी तान् त्रीन् अपि आहूय उक्तवान्— "भवन्तः त्रयः एव ग्रामे विवेकिनः इति सर्वे उक्तवन्तः । किन्तु अहं भवत्सु अपि उत्तमः कः इति ज्ञातुम् इच्छामि । एतदर्थं भवतां कृते एका परीक्षा आयोजनीया इति चिन्तितवान् । एतत् भवतु वा ?" इति ।

ग्रामाधिकारिणः वचनं श्रुत्वा त्रयः अपि आश्चर्यचकिताः । किमर्थं ग्रामाधिकारी बुद्धिमत्तायाः परिक्षां कर्तुम् इच्छति इति ते न ज्ञातवन्तः । अतः ग्रामाधिकारिणः आशयं ज्ञातुम् इच्छन्तः ते त्रयः ऐकमत्येन उक्तवन्तः- "भवता चिन्तिता परीक्षा का ? वदतु तावत्" इति ।

तदा ग्रामाधिकारी उक्तवान्- "भवतः त्रीन् अपि मरुभूमौ भिन्नभिन्नस्थलेषु अन्नजलादीनि अदत्वा त्यजामि । यः ग्रामं प्रथमं प्रत्यागच्छति तस्मै दश दीनारान् पारितोषिकरूपेण ददामि ।

एषा एव परीक्षा'' इति ।

तदा रामः उक्तवान्– ''बुद्धिमान् विवेकी पुरुषः सर्वविधकष्टैः आत्मानं रक्षति । तप्तानां सिकतानां तापस्य अनुभवः यथा न भवेत्, यथा च अङ्गुलीनां मध्ये सिकताः न प्रविशेयुः तादृशीं पादरक्षां मम कृते दापयतु । तदा एव अहं भवतः परीक्षां सम्मुखीकरोमि'' इति । भीमः उक्तवान्– ''कष्टानि तीर्त्वा कथं प्रत्यागच्छामि इति अहम् अन्यं न वदामि । किन्तु भवता भवदीयः एकः विश्वासार्हः जनः मया सह प्रेषणीयः'' इति ।

तदा विस्मितः ग्रामाधिकारी उक्तवान्– ''अत्र किमपि रहस्यं अस्तीति प्रतिभाति । अतः भवतः उद्देशः कः इति स्पष्टं वदतु'' इति ।

''विवेकिना सह सर्वदा एकः सहायकः भवेत् एव । तेन, यदा समस्याः आगच्छन्ति तदा सुलभतया परिहारः अन्वेष्टुं शक्यते । अन्यथा भवदीयं विश्वासार्हं पुरुषं भवान् नाशयितुं न प्रेषयति किल ? अतः मया सह यः आगच्छति, तं प्रति मरुभूमितः आगमने सुलभमार्गं सूचयित्वा एव भवान् प्रेषयति । तम् अनुसृत्य अहम् अपि प्रत्यागन्तुं शक्नोमि । अतः एव मया तथा नियमः सूचितः'' इति ।

ग्रामाधिकारी सोमं पश्यन् उक्तवान्– ''एतद्विषये भवान् किं वदति ?'' इति ।

सोमः उक्तवान्- ''विवेकी पुरुषः आपत्-काले चातुर्येण व्यवहृत्य आपदं परिहरति इति तु सत्यम् एव । किन्तु बुद्ध्या आपदः आह्वानं न करोति । भवान् माम् अविवेकिनं चिन्तयति चेदपि चिन्ता नास्ति । अहं तु दशदीनाराणां कृते एतादृशपरीक्षां न अङ्गीकरोमि'' इति ।

सोमस्य उत्तरं श्रुत्वा ग्रामाधिकरी-''विवेकित्वं नाम किम् ?'' इति ज्ञातवान् । अतः तान् सर्वान् तत्क्षणे एव प्रेषितवान् । ''एवम् अहं दशदीनाराणाम् अपव्ययं निवारितवान्'' इति सः आत्मनि एवं तृप्तिम् अनुभूतवान् ।



# एकम् एव दुर्व्यसनम्

एकस्मिन् ग्रामे आनन्दः नाम महान् पण्डितः आसीत् । तस्य सुधामः नाम तरुणः पुत्रः । किन्तु तस्मिन् ग्रामे कोऽपि तस्मै कन्यां दातुं न सिद्धः । कदाचित् गोविन्दः नाम सह-पाठी आनन्दस्य गृहम् आगतवान् । सः स्वपुत्र्याः विवाहार्थं वरान्वेषणं कुर्वन् आसीत् ।

बहोः कालात् अनन्तरम् आगतं मित्रं दृष्ट्वा आनन्दस्य बहु सन्तोषः अभवत् । द्वावपि बाल्यदिनानि स्मृत्वा वार्तालापं कृतवन्तौ ।

तदा गोविन्दः पुत्र्याः विषयम् उक्त्वा "भवतः पुत्रः एव मम पुत्र्याः पाणिग्रहणं करोति चेत् समीचीनम् । तथापि सुधामस्य कोऽपि कन्यां न ददाति इति वार्ता श्रुता । तत्र किं कारणम् ? सुधामस्य दुर्व्यसनादिकम् अस्ति वा ?" इति आनन्दः पृष्टवान् ।

"भवान् एव केनापि व्याजेन तं पृष्ट्वा आगच्छतु" इति उक्तवान् आनन्दः ।

सायङ्काले गोविन्दः सुधामम् एकान्ते पृष्टवान्—" एकः सामान्यः विषयः । अन्यथा मा भावयतु । भवतः यत्किमपि दुर्व्यसनम् अस्ति वा ?" ।

"नैव, दुर्व्यसनं किमपि नास्ति" इति सुधामः उक्तवान् ।

गोविन्दः एतं विषयम् आनन्दस्य समीपे उक्तवान् । तदा आनन्दः हसन् "मम पुत्रस्य एकमेव दुर्व्यसनं यत् असत्यकथनं नाम" इति उक्तवान् ।





# सूर्येण सह स्पर्धा

पूर्वकाले ब्रह्मदत्तः काशीराज्यं परिपालयति स्म । तेषु दिनेषु चित्रकूटपर्वते नवतिसहस्र-हंसाः निवसन्ति स्म । तदा बोधिसत्वः हंसरूपेण जन्म प्राप्तवान् । तस्य अनेके उत्तमगुणाः आसन्। अत्यधिकवेगेन उड्डयनं कर्तुम् अपि सः समर्थः आसीत् । अतः सः हंसेषु प्रमुखः अभवत् ।

जनाः सर्वगुणसम्पन्नम् अतिशय- शक्ति-शालिनं च एतं हंसं 'राजहंसः' इति कथयन्ति स्म ।

एकदा राजहंसः विहारार्थं स्वपरिवारेण सह सुदूरे स्थितम् एकं सरोवरं गतवान् । विहारा-नन्तरं सः निवासस्थानं प्रत्यागच्छन् आसीत् । मार्गे काशीराज्यं मिलितम् । पक्षिणां विशालः समूहः यदा उड्डयनं करोति स्म, तदा समग्रस्य काशीराज्यस्य उपरि सुवर्णमयः वितानः निर्मितः इव दृश्यते स्म ।

काशीराजः आश्चर्येण हंसानां मध्ये विराज-मानं राजहंसं दृष्ट्वा व्यामुग्धः । हंसस्य गाम्भीर्येण सौन्दर्येण च राजा आकृष्टः आसीत् ।

राजलक्षणैः, राजगाम्भीर्येण, अपरिमित-तेजसा च विराजमानं हंसं दृष्ट्वा राजा प्रभा-वितः । सः पुष्पमालिकाः पूजाद्रव्याणि च आनेतुं सेवकान् आज्ञापितवान् । सेवकैः आनीतानि तानि प्रदर्श्य राजहंसं संज्ञया आमन्त्रितवान् ।

राजहंसेन महाराजस्य एतत् आदरपूर्वकम् आह्वानं सन्तोषेण अङ्गीकृतम् । स्वपरिवारेण सह राजभवनस्य उपरि अवतरणं कृतं च । महाराजः महता वैभवेन अतिथिसत्कारं कृत-वान् । राजभवने कानिचन दिनानि स्थित्वा राजहंसः स्वनिवासं प्रति उड्डयनम् अकरोत् ।

तद्दिनात् आरभ्य राजहंसस्य विषये महा-राजस्य ममता अधिका जाता । महाराजस्य मनः सर्वदा राजहंसम् एव ध्यायति स्म । "यदा–

"जातककथा"

कदाऽपि राजहंसः पुनः मम राज्यम् आगच्छेत्। तदा अहं तस्य पुनर्दर्शनं प्राप्नुयाम्' इति चिन्तयन् राजा हंसं प्रतीक्षमाणः एव दिनानि यापितवान् ।

एकदा चित्रकूटपर्वते बालहंसौ राजहंस–समीपम् आगत्य उक्तवन्तौ– "राजन् ! वेगविषये सूर्येण सह स्पर्धा करणीया इति आवयोः इच्छा । एतदर्थं गन्तुं कृपया अनुमतिम् अनुगृह्णातु" इति ।

एतत् श्रुत्वा मन्दहासपूर्वकं राजहंसेन उक्तं रे ! किम् इदं मूर्खत्वम् ! उग्रकिरणशाली तीव्रगामी सूर्यः कुत्र ? इदानीम् अपि अल्पवयस्कौ बालकौ भवन्तौ कुत्र ? सूर्येण सह स्पर्धा नाम न सुलभम् । अविचार्य यदि स्पर्धार्थं गम्यते तर्हि भवतोः प्राणापायः एव स्यात् । अतः साहसं मास्तु अविवेकजन्यम् एतं विचारं त्यक्त्वा कुत्रापि आनन्देन क्रीडयताम्' इति ।

एतत् हितवचनं श्रुत्वा तौ बालहंसौ तत्क्षणे तु तूष्णीं स्थितवन्तौ । किन्तु अल्पे एव काले पुनरपि आगत्य एतदर्थम् अनुमतिं पृष्टवन्तौ । अस्मिन् समये अपि राजहंसेन हितवचनानि उक्त्वा तौ प्रेषितौ ।

तृतीयवारम् अपि यदा तौ अनुमतिं पृष्टवन्तौ तदा राजहंसेन पुनः निराकरणं कृतम् ।

"राजहंसस्य अनुमतेः प्रार्थने प्रयोजनं



नास्ति" इति तौ बालहंसौ निश्चितवन्तौ । अतः एकस्मिन् दिने तौ राजहंसम् अनुक्त्वा एव चित्रकूटतः निर्गत्य युगन्धरपर्वतं प्राप्तवन्तौ। युगन्धरपर्वतस्य शिखराणि सूर्यमण्डलं स्पृशन्ति इव ! "एतत् शिखरम् आरुह्य सुलभतया सूर्येण सह स्पर्धितुं शक्यते" इति तयोः मुग्ध- बालहंसयोः विचारः ।

तद्दिने यथापूर्वं राजहंसेन स्वपरिवारस्य गणना कृता । तेन, हंसद्वयं न्यूनम् अस्ति इति ज्ञातम् ।

किं प्रवृत्तं स्यात् इति राजहंसेन तत्क्षणे एव ज्ञातम् । तस्य मनसि व्यथा समुत्पन्ना। "इतःपरं चिन्तया प्रयोजनं नास्ति । यथाकथञ्चित् तौ बालौ रक्षणीयौ" इति राजहंसेन



निश्चितम् ।

शीघ्रम् एव राजहंसेन युगन्धरपर्वतस्य शिखरं प्राप्तम् । तत्र वृक्षसमूहस्य मध्ये निलीय स्थितं च ।

सूर्योदयानन्तरं तौ बालहंसौ सूर्येण सह स्पर्धार्थम् उड्डयनं कृतवन्तौ । राजहंसः अपि तयोः अनुसरणम् अकरोत् ।

बालहंसयोः अन्यतरः कनीयान् हंसः मध्याह्नपर्यन्तम् उड्डयनम् अकरोत् । सूर्यतापेन तस्य पक्षौ दग्धौ । उड्डयनं कर्तुम् असमर्थः सः हंसः अधः अपतत् । पतनसमये तेन राजहंसः दृष्टः । तदा सः दैन्येन ''राजन् ! अहं पराजितः । पतन्तं मां कृपया रक्षतु'' इति प्रार्थनाम् अकरोत् ।

तदा राजहंसः ''भीतिः मास्तु, अहम् अस्मि किल ?'' इति सान्त्वयन् तं बालहंसं स्वपक्षयोः उपरि आरोपयत् । सक्षेमं चित्रकूटम् आनीय परिवारसदस्यानां मध्ये अत्यजत् ।

राजहंसः पुनरपि वेगेन उड्डीय युगन्धर-पर्वतशिखरं प्राप्नोत् । तदा द्वितीयः हंसः अपि अपायपरिस्थितौ आसीत् । सूर्यकिरणानां तापेन पीडितः उड्डयितुम् असमर्थः सन् दीनतापूर्वकं राजहंसं रक्षितुं प्रार्थयत । राजहंसः तम् अपि सान्त्वयन् स्वपक्षयोः उपरि आरोप्य चित्रकूटं प्रापयत् ।

''मम परिवारस्य सदस्यौ बालहंसौ सूर्येण पराजितौ । परिवारीयस्य पराजयः नाम मम अपि पराजयः एव । एतत् अहं कथं सोढुं शक्नोमि ? अहम् अपि सूर्येण सह स्पर्धां करोमि । मम शक्तिः तु अपरिमिता । अतः अहं जयं प्राप्नोमि एव'' इति चिन्तयित्वा राजहंसः स्पर्धार्थं सिद्धः । त्वरितगत्या उड्डयनं कुर्वता राजहंसेन अल्पे एव काले सूर्यमण्डलम् अतिवर्त्य गतम् ।

एतेन सूर्यस्य शक्तिः कियती इति राज-हंसेन ज्ञातम् । एतादृशस्पर्धया लाभः न आसीत् । तथापि एतेन ''हंसाः असमर्थाः'' इति अपवादः दूरीकृतः अभवत् ।

राजहंसः सूर्यमण्डलस्य उपरि एव किञ्चित्-कालं विहारं कृत्वा अनन्तरं भूलोकम् आगत्य,

काशीराज्यं प्राप्नोत् ।

दीर्घकालतः काशीराजः राजहंसस्य प्रतीक्षायाम् आसीत् किल ? अकस्मात् राजहंसं दृष्ट्वा सः अतीव आनन्दितः ।

सः राजहंसं स्वर्णसिंहासने उपवेशितवान् । स्वयं स्थालिकायां पायसं, तथा स्वर्णकलशे शीतलं पानकं च दत्वा सत्कारं कृतवान् ।

महाराजस्य आतिथ्येन राजहंसस्य श्रान्तिः अपगता । तदा राजा हंसं आयासकारणं पृष्टवान् ।

राजहंसः बालहंसयोः साहसकथां उक्त्वा, स्पर्धायां आत्मना प्राप्तं जयम् अपि निवेद्य अवदत्—"राजन् ! भवतः सत्कारेण अहं बहु उपकृतः । भवदीयं सत्कारं जन्मनि कदापि न विस्मरामि" इति ।

तदा राजा अनुरोधं कृतवान्—"पक्षिराज ! भवतः अलौकिकशक्तिं द्रष्टुं बहुकालतः मम इच्छा अस्ति । सूर्येण सह स्पर्धां कुर्वतः भवतः शक्तिः अद्भुता एव । अतः कृपया तां शक्तिं प्रदर्शयतु" इति ।

राजहंसेन एतत् अङ्गीकृतम्, उक्तंच—"एवं चेत् विद्युद्वेगेन बाणप्रयोगं कर्तुं समर्थान् चतुरः पुरुषान् आह्वयतु" इति । एतदनुसारं चत्वारः धनुर्धारिणः आहूताः ।

महाराजस्य उद्याने एकः चतुरस्रः स्तम्भः आसीत् । स्तम्भस्य चतुर्दिक्षु एकैकं धनुर्धारिणं स्थातुं उक्त्वा, स्वयं कण्ठे एकां घण्टां धृत्वा, राजहंसेन स्तम्भस्य उपरि उपविष्टम् ।



अनन्तरं धनुर्धारिणः उद्दिश्य राजहंसेन उक्तम्– "अहं यदा संज्ञां करोमि तदा युगपद् एव बाणप्रयोगं कुर्वन्तु। अहम् उड्डीय गत्वा भवतां चतुर्णाम् अपि बाणान् आनीय ददामि। तच्च कार्यं तावता वेगेन प्रचलति यत् मम गमनागमनं घण्टाशब्देन केवलम् ऊहितुं शक्यम्। मां द्रष्टुं तु कोऽपि न शक्नोति" इति।

धनुर्धारिभिः चतुर्दिक्षु बाणप्रयोगः कृतः। राजहंसेन विद्युद्वेगेन गत्वा निमेषमात्रे बाणाः प्रत्यानीताः। धनुर्धारिणां पुरतः स्थापिताः च।

महाराजः तत्परिवारसदस्याः च एतत् दृष्ट्वा आश्चर्यचकिताः।

तदा राजहंसेन उक्तम्- "परीक्षितः किल मम वेगः? एषः च अतीव कनिष्ठः वेगः। एतस्य आधारेण "मदीयः वास्तविकः वेगः कीदृशः स्यात्" इति भवान् एव चिन्तयतु।"

तदा राजा आश्चर्येण पृष्टवान् 'पक्षिराज! भवतः वेगः मया प्रत्यक्षं दृष्टः। इतोऽपि अतिशयः वेगः कस्यापि स्यात् वा'?

राजहंसेन उक्तम्- "किमर्थम् न? मम अपेक्षया अनन्तगुणितः वेगः लोके एकस्य अस्ति। सः एव कालनामकः सर्पः। एषः कालसर्पः प्रतिक्षणम् अपि विश्वस्य जीविनः अवर्णनीयवेगेन नाशयन् अस्ति"।

एतानि वचनानि श्रुत्वा महाराजस्य कम्पनम् आरब्धम्।

तदा राजहंसरूपेण स्थितः बोधिसत्वः राजानं सान्त्वयन् एवं तत्वोपदेशं कृतवान्- "राजन्! 'कालसर्पः कश्चन अस्ति' इति यः सर्वदा स्मरति तस्य भीतिः नास्ति एव। यावत् भवान् नीत्या धर्मेण च राज्यपरिपालनं करोति तावत्पर्यन्तं भवतः भीतिः मास्तु। भवान् विधिपूर्वकं कर्तव्यं पालयतु। एतेन कालसर्पः भवन्तं स्पृशति चेदपि, स च स्पर्शः सुखाय एव भविष्यति" इति।

बोधिसत्वस्य उपदेशानुसारं काशीराजः राज्यं परिपालयन् अपारं यशः प्राप्तवान्।





# लार्ड् बेण्टिक्, लार्ड् डलहौसी

नवदशशतकस्य आरम्भे आंग्लाः, भारते स्वराज्यं सुदृढं कर्तुं प्रयत्नम् आरब्धवन्तः । क्रमशः भारतीय-शासकानाम् अधिकारः न्यूनीभूतः । मध्यभारते पिण्डारिनामकाः लुण्ठाकाः ग्रामेषु लुण्ठनम् आरब्धवन्तः ।

तान् निर्मूलयितुम् आंग्लसेनया सर्वप्रयत्नः कृतः । पिण्डारिजनानां नायकः 'पठान् - अमीर - खानः' आंग्लानाम् अधिकारम् अङ्गीकृतवान् । सः टोंकप्रदेशस्य शासकत्वेन नियोजितः । 'चित्तू' नामकः अन्यः नायकः अरण्यं पलायितवान् तत्र सः एकेन क्रूरव्याघ्रेण मारितः ।





एतेषु दिनेषु भारतस्य केषुचित् प्रदेशेषु पत्युः मरणानन्तरं पत्नी अपि चितां प्रविशति स्म । आरम्भे काले एतत् श्रद्धायाः भक्तेःच प्रतीकम् आसीत् । कालान्तरे एतत् सामाजिक–कुरीतित्वेन परिवर्तितम् । एतत् अवरोद्धुं लार्ड् बेण्टिकः एकं नियमं कृतवान् ।



तेषु एव दिनेषु बहुत्र 'थग' नामकेभ्यः लुण्ठाकेभ्यः भीतिः प्रसृता आसीत् । लार्ड बेण्टिकः एतान् अपि निगृहीतवान् ।

कुत्रचित् फलसमृद्ध्यर्थं नरबलिः अपि दीयते स्म । एतां कुप्रथां निर्मूलयितुम् अपि लार्डबेण्टिकः कठोरं निश्चयं स्वीकृतवान् । एवं लार्डबेण्टिकः समाजसुधारकत्वेन कीर्तिं प्राप्तवान् ।





यदा भारतीयराजाः स्वाधिकारैः वञ्चिताः भवन्तः आसन्, तदा पञ्जाबदेशे महाराजः रणजीतसिंहः स्वसामर्थ्यं वर्धयन् आसीत् । तस्य नेतृत्वे सर्वे सिक्खजनाः एकतासूत्रे बन्धिताः । सुदूरं भविष्यं मनसि स्थापयन् रणजीतसिंहः आंग्लानां मैत्रीं सम्पादितवान् ।

१८४६ तमे संवत्सरे लार्ड डलहौसी भारतस्य 'गवर्नरजनरल' पदे नियुक्तः । रणजीतसिंहस्य मरणानन्तरम् आंग्ल - सिक्खजनानां मध्ये युद्धम् आरब्धम् । डलहौसी विजयी जातः । पञ्जाब- प्रदेशः अपि आंग्लानां अधीने आगतः । एवं बर्मातः पेशावरपर्यन्तम् आंग्ल-शासनं विस्तृतम् ।





डलहौसिना एषः नियमः कृतः- यत्— 'यस्य महाराजस्य सन्तानः न भवति, तस्य राज्यम् ईस्ट-इण्डिया - कम्पनीवशम् आगच्छति' इति । किन्तु सः— 'एषः नियमः भारतीय- परम्परायाः विरुद्धः । अपि च भारतीयराजानाम् अपमानास्पदं च' इति न जानाति स्म ।

एतन्नियमानुसारं नागपुर—सम्बलपुर-सातारा-राज्यानि आंग्ल-साम्राज्यस्य अधीनानि जातानि । १८५३ तमे वत्सरे झान्सीराजः गङ्गाधररावः, एकं बालकं दत्तकं स्वीकृतवान् । किन्तु डलहौसिना एतत् न अनुमतम् । अल्पे एव काले गङ्गाधररावः दिवंगतः च ।





तस्मिन् एव वर्षे महाराष्ट्र-शासकः द्वितीयः पेश्वे- बाजीरावः नानासाहेबः आंग्लनां प्रबलः शत्रुः सञ्जातः ।

साम्राज्यवादी चेदपि डलहौसी देशस्य विकासे रुचिं प्रदर्शयति स्म । तस्य एव प्रयत्नेन १८५३ तमे वत्सरे भारते प्रथमः, मुम्बई-थाना पर्यन्तः धूमशकट- (रेल) मार्गः निर्मितः ।






तेषु एव दिनेषु भारते टेलिग्रां व्यवस्था अपि आरब्धा । अर्धम् आणकं शुल्कं निश्चित्य समग्रे देशे पत्रालय-सेवां व्यवहारे आनीतवान् । डलहौसिना कलकत्ता-मुम्बई-मद्रास-प्रदेशेषु विश्वविद्यालयाः अपि स्थापिताः ।




# अहम् एव मूर्खः

पूर्वम् एकस्मिन् नगरे एकः धनिकः आसीत्। तस्य नाम शिलामुखः इति। सः वाणिज्ये कुशलः। सः फलविक्रयणेन बहुधनं सम्पादितवान्। तस्य एकम् आम्रवृक्षाणां वनम् आसीत्।

शिलामुखः तस्मिन् उपवने एकस्मिन् कोणे एकं कुटीरं निर्माय तत्र वसति स्म। प्राणधारणार्थं यावत् आवश्यकं तावत् एव धनम् व्ययीकरोति स्म। अवशिष्टं भूमौ स्थापयति स्म। पत्नीपुत्राणां अशनवसनादिविषये अपि कृपणतां दर्शयति स्म। शिलमुखः महान् कृपणः। वने फलितानि फलानि स्वयम् अपि न खादति, अन्येषां कृते अपि न ददाति। पुत्रादयः खादन्ति चेत् सः तस्य मूल्यं गणयति स्म। दानधर्मादीनां नाम अपि सः न जानाति।

एकदा सः फलानां सञ्चयनं कर्तुं कर्मकरान् आज्ञापितवान्। सर्वे कर्मकराः मिलित्वा फलचयनं, विभजनम् इत्यादिकं कुर्वन्ति स्म।

शिलामुखः जागरूकतया चयनकार्यं पश्यति स्म। गणनकार्ये सः कदापि प्रमादं न करोति स्म। पादरूप्यकमूल्यकानि, अर्धरूप्यकमूल्यकानि, पादोनरूप्यकमूल्यकानि, एकरूप्यकमूल्यकानि इति सः फलेषु त्रिभागं करोति स्म। सर्वेषु अपि गणेषु कति फलानि सन्ति इति समीचीनतया गणयति स्म।

तस्मिन् समये एकः कर्मकरः आत्मानं निग्रहीतुम् असमर्थः भूत्वा फलं खादितवान्। शिलामुखः एतत् दृष्टवान्।

कुपितः शिलामुखः— "किं रे! अनुक्त्वा एव फलं खादति वा? तस्य मूल्यम् एकं रूप्यकम्। भवतः दैनिकं वेतनं तु अर्धरूप्यकात्मकम्। अतः भवता अद्य श्वः च अत्र आगत्य विना वेतनं कार्यं करणीयम्" इति उक्तवान्।

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा।'




एवमेव दिनानि अतीतानि। शिलामुखः पुनः आगत्य फलानि दृष्ट्वा दृष्ट्वा तत्रैव अटति स्म। यः कोऽपि शिलामुखं दृष्ट्वा "किं, भोः श्रीमन्! शिलामुखमहोदय! एतावन्ति फलानि व्यर्थानि भवन्ति। शीघ्रं विक्रयणं करोतु। कुतः एवं विलम्बः क्रियते?" इति पृच्छति चेत् सः तम् एव तर्जयति स्म।

"अहं सर्वं जानामि। गच्छतु भवान्! एते कर्मकराः उद्धताः। फलचयनं कुर्वन्तु इति उक्ते, यथेच्छं खादन्ति! किमर्थम् इति न प्रष्टव्यम्! माम् एव ताडयितुं आगच्छन्ति। कलिकालः! ते वा किं कुर्वन्ति? वृष्ट्या वा, वातेन वा, आतपेन वा, सर्वाणि फलानि नष्टानि इति भावयामि। किन्तु कस्यापि साहाय्यं न इच्छामि" इति किमपि रटति स्म।

एकस्मिन् दिने एवमेव खिन्नः सः वने अटति स्म। तदा एकस्य आम्रवृक्षस्य उपरि उपविश्य गायन्तं एकं सुन्दरं पक्षिणं सः दृष्टवान्।

सः पक्षी चटकसदृशः आसीत्। तस्य पुच्छे सप्तवर्णाः अपि आसन्। सः पक्षी एकवारं मन्दस्वरेण, पुनः एकवारं तारस्वरेण सुमधुरं गायति स्म।

तत् मधुरं गानं श्रुत्वा शिलामुखः आनन्देन तस्य समीपं गतवान्। पक्षी वृक्षस्य अधोभागे एव आसीत्। अतः एव सः तस्य

कर्मकरः एतत् न अङ्गीकृतवान्। 'प्रातः आरभ्य कार्यं कृत्वा अपि एकं फलं खादितुं अवकाशः नास्ति वा?' इति तस्य वादः। एवमेव आरब्धः कलहः क्रमेण परस्पर-ताडनपर्यन्तं गतः। अन्ते बलवान् सः कर्मकरः, शिलामुखस्य शरीरं शिथिलयित्वा गतवान्। अन्ये अपि कर्मकराः तेन सह प्रतिनिवृत्ताः।

"एकं लघुफलं चेत् तस्य मूल्यं पादरूप्यकं भवति। एषः कर्मकरः, तावत् बृहत् फलं खादति चेत् किं कुर्मः? एतावत् एव न। सः माम् अपि ताडयितुं प्रवृत्तः। एतादृशानां दुष्टानां कृते किं कर्तुम् शक्यते" इति चिन्तयन् बहुखिन्नः अभवत् शिलामुखः।




समीपं गत्वा झटिति तं पक्षिणं हस्ते गृहीतवान्। सः पक्षी न भीतः। किन्तु गानं स्थगयित्वा तूष्णीम् अभवत्।

तदा शिलामुखः तं पक्षिणं "हे पक्षिन्! भवान् मया सह सम्भाषणं कर्तुम् इच्छति वा? मम कृते फलानि विक्रेतुं सुलभं मार्गं वक्तुं शक्नोति वा? यथा सम्यक् गायति तथैव एकां सुलभां लाभयुक्तिं वदति वा?" इति पृष्टवान्।

सः पक्षी मनुष्यभाषया अवदत्– "प्रथमं मां त्यजतु। अनन्तरं लाभदायकं वचनत्रयं वदामि" इति।

पक्षिणः मानवभाषां श्रुत्वा शिलामुखः आश्चर्यचकितः। सः पुनः पृष्टवान् –'सत्यं वा? मम कृते लाभकरं मार्गं वदति वा?' इति।

"सत्यं वदामि" इति पक्षी अवदत्।

शिलामुखः पक्षिणं त्यक्तवान्। सः पक्षी एकस्मिन् वृक्षे उपविश्य अवदत्- "अहं भवन्तं लाभदायकं वाक्यत्रयम् वदामि। तेषु प्रथमं वाक्यम् शृणोतु– "अविद्यमानस्य वस्तुनः विषये चिन्ता न करणीया" इति।

शिलामुखः तत् वचनं श्रुत्वा "एतत् वाक्यं बाल्ये एव गुरुभिः पाठितम्। अत्र कः विशेषः?" इति पृष्टवान्।

पक्षी पुनः अवदत् "शिलामुख! भवान् मूर्खः। नो चेत् मम शरीरे यत् सुवर्णं आसीत् तत् भवान् जानाति स्म। किञ्चित् काल-पर्यन्तम् अहं भवतः हस्ते एव आसम्। तथापि भवान् एतत् न ज्ञातवान् किल?" इति।

"हन्त! हन्त! भवतः शरीरे सुवर्णं आसीत् वा? भवन्तं त्यक्त्वा मया अपराधः कृतः।"

पक्षी पुनः मन्दहासेन अवदत् "शिलामुख, भवान् खलु मूर्खः? मम शरीरे सुवर्णम् अस्ति इति उक्ते, सत्यम् इत्येव चिन्तितवान्। अल्पभारयुतस्य मम शरीरे कथं वा सुवर्णं भवितुम् अर्हति? एतं लघुविषयम् अपि भवान् न ज्ञातवान्। भवान् निश्चयेन मतिहीनः" इति।

कुपितः शिलामुखः "रे असत्यवादिन्! भवन्तं मारयामि" इति गर्जनं कृतवान्।

"मम वचनं सत्यम् इति अनन्तरं ज्ञायते।

इदानीं द्वितीयं वाक्यं श्रृणोतु–

"अन्यैः यदुक्तं तत् सर्वम् अपि सत्यं न भवति ।"

"तत् पुनः भवता वक्तव्यं वा ? इदानीं भवद्वचनेन एव तत् ज्ञातं किल ?"

"सर्वज्ञः अपि भवान् मूर्खः इव कार्यं करोति । मम तृतीयं वाक्यं श्रृणोतु ! मम समीपे अधिकप्रमाणं सुवर्णम् अस्ति इति उक्तम् किल ? तत् न मम समीपे । किन्तु भवतः वने एव तत् अस्ति । भवान् एकस्य फलस्य लोभेन सर्वाणि अपि फलानि व्यर्थं कृतवान् । भूमौ विद्यमानम् ऐश्वर्यं विहाय भवान् तत् अन्यत्र अन्विषति । भवान् खलु मूर्खः ?" इति पक्षी पुनः भर्त्सनं अकरोत् ।

तत् वचनं श्रुत्वा शिलामुखः उन्मत्तः इव "सत्यम्, अहम् एव मूर्खः । कर्मकराः फलं खादन्ति इति बुद्ध्या फलचयनम् एव निराकृतवान् । इदानीं तु सर्वाणि फलानि नष्टानि । भाग्यहीनस्य मम सर्वनाशः समुत्पन्नः" इति शिरोघट्टनपूर्वकं रोदनं कृतवान् ।

तावति एव काले कुतश्चित् झञ्झावातः समागतः । सर्वाणि वृक्षपत्राणि गगनं गतानि । वृक्षाः समूलं पतिताः । किञ्चित्काले एव प्रलयः संवृत्तः इव ।

शिलामुखः बहु भीतः । नेत्रं निमील्य एकत्र उपविष्टवान् । यदा झञ्झावातः स्थगितः तदा एषः पुनः नेत्रम् उन्मीलितवान् । तदा पक्षी अपि न आसीत् । स्वकीयं गृहम् अपि विनष्टम् आसीत् ।

तदा तस्य ज्ञानोदयः अभवत् । "अहं खलु मूर्खः । हतभाग्यः । यदा सम्पत्तिः आसीत् तदा न अनुभूता । पत्नीपुत्राणां कृते अपि निर्बन्धः कृतः । दानधर्मादिना पुण्यम् अपि न सम्पादितवान् । इदानीं किम् अस्ति ?" इति महान्तं पश्चात्तापम् अनुभूतवान् ।

अनन्तरं निगूढं धनं स्वीकृत्य तेन धनेन सुष्ठुरीत्या जीवनं कृतवान् ।





# भ्रमनिवृत्तिः

पुङ्गवपुरे बहवः धनिकाः आसन्। तेषु चैतन्यः अन्यतमः। युवकस्य तस्य विवाहः जातः। तस्य पत्नी भानुमती अपि धनिक-पुत्री एव। विवाहानन्तरं भानुमत्याः जन्म-दिनोत्सवः सम्प्राप्तः। भानुमत्याः कृते एकम् उपायनम् आनेतुं चैतन्यः नगरं गतवान्। तत्र दशसहस्रदीनारान् दत्वा सः एकां मुक्तावलीं क्रीतवान्।

अनन्तरं सः स्वकीये अश्वशकटे उपविश्य ग्रामं प्रत्यागच्छति स्म। सन्ध्यासमयः आसीत्। सः शकटचालकं हालकं प्रति 'हालक, शीघ्रं शीघ्रं शकटं चालयतु' इति उक्तवान्। 'तथा एव अस्तु आर्य !' इति उक्त्वा हालकः अश्वं किञ्चित् ताडयित्वा 'हे हे' इति प्रेरितवान्। अश्वः उत्साहेन धावति स्म। चैतन्यः किञ्चित् तन्द्रामग्नः जातः।

एकत्र शकटः स्थगितः। चैतन्यः जागृतिं प्राप्य 'किमर्थं शकटः स्थगितः?' इति पृष्टवान्।

हालकः मार्गस्य पार्श्वे स्थितम् एकं दर्शयित्वा "आर्य, एषः कालेयः मम पत्न्याः पितृव्यस्य पुत्रः। अस्य पितामहः मरणशय्यायाम् अस्ति। सः अस्माकं ग्रामस्य समीपे एव वसति। एषः शीघ्रं गत्वा पितामहस्य अन्तिमदर्शनं प्राप्तुम् इच्छति" इति उक्तवान्।

"एवं तर्हि सः अस्माकं शकटे स्थानम् इच्छति किल ? अस्तु" इति चैतन्यः उक्तवान्। यद्यपि चैतन्यः स्वीयशकटे अन्यस्य प्रवेशं न इच्छति, तथापि इदानीं करुणया तूष्णीं स्थितवान्। कालेयः चैतन्यं नमस्कृत्य शकटे उपविष्टवान्।

पुनः शकटः अग्रे प्रस्थितः। सः मार्गः अतीव निम्नोन्नतः आसीत्। अतः एकत्र गर्ते चक्रस्य स्खलनम् अभवत्। उत्तरक्षणे एव शकटः पतितः। हालकः तु यथाकथञ्चित् शकटतः कूर्दितवान्। चैतन्यः कालेयः च



अधः पतितवन्तौ। तयोः उपरि चैतन्येन क्रीताः फलानां कण्डोलाः अन्यानि वस्तूनि च पतितानि।

प्रथमतः कालेयः उत्थितवान्। अनन्तरं हालकः कालेयः च मिलित्वा चैतन्यम् उत्थापितवन्तौ। चैतन्यस्य दक्षिणपादे वेदना आसीत्। ततः कालेयः हालकः च गर्ततः चक्रम् उन्नीय शकटं सुस्थितं कृतवन्तौ। मार्गे पतितानि सर्वाणि वस्तूनि पुनः शकटे स्थापितवन्तौ। पुनः शकटः प्रस्थाय अल्पकाले एव ग्रामं प्राप्तः। तत्र कालेयः शकटतः अवतीर्य गम्यस्थानं प्रति प्रस्थितवान्।

चैतन्यः स्वगृहस्य पुरतः शकटतः अवतीर्णवान्। अनन्तरं पादवेदनाकारणात् शनैः शनैः गृहं प्रविष्टवान्। तदा तस्य पत्नी तं दृष्ट्वा "किमर्थं भवान् मन्दं चलति? मम जन्मदिनस्य उपायनं तावत् गुरुभूतम् अस्ति वा?" इति पृष्टवती।

तस्याः प्रश्नं श्रुत्वा चैतन्यः किञ्चित् विचलितः। सा प्रायः स्वीयां पादवेदनां न लक्षितवती इति मत्वा "हन्त! मार्गे शकटः पार्श्वभागे पतितः। यथाकथञ्चित् प्राणाः रक्षिताः। देवानुग्रहात् महती विपत्तिः परिहृता।" इति उक्तवान्।

"अहो! एवम् अभवत् वा? प्रथमम् अमृताञ्जनं लेपयामि" इति उक्त्वा भानुमती तस्य हस्तं गृहीतवती।

"लेपनम् अनन्तरं भवतु। प्रथमं मया आनीतम् उपायनं पश्यतु" इति स्यूतं तस्याः हस्ते चैतन्यः दत्तवान्।

चैतन्येन दत्तं स्यूतं भानुमती औत्सुक्येन गृहीत्वा तस्मिन् स्थितां मनोहरां लघुमञ्जूषां उद्घाटितवती।

"इदानीम् एव मम एका सखी आगतवती। तया अपि मत्कृते एकम् उपायनम् आनीतम् अस्ति। भवताम् उपायनं दृष्ट्वा अनन्तरं स्वकीयं दर्शयामि इति सा वदति। अतः इदं तस्याः कृते दर्शयामि" इति वदन्ती एव किञ्चित् सम्भ्रान्ता सा "किमिदं भोः! किम् आनीतं भवता?" इति पृष्टवती।



चैतन्यः अपि दृष्टवान्। मञ्जूषा रिक्ता आसीत्!

भानुमती चैतन्यं सक्रोधं पश्यन्ती–"भवतः उपायनं बहु मनोहरम् अस्ति !" इति उक्तवती।

चैतन्यस्य आश्चर्यं, क्रोधः सम्भ्रमः च युगपत् एव जाताः।

"भवतु, भवतः उपायनं श्वः एव सर्वेषां पुरतः दास्यामि इति मम सखीं प्रति वदामि" इति उक्त्वा रिक्तां मञ्जूषां तत्रैव स्थापयित्वा सा अन्तः गतवती।

चैतन्यः क्रोधेन कम्पमानः कर्कशस्वरेण हालकम् आकारयन् बहिः आगतवान्। कालेयः एव चोरः इति सः चिन्तितवान्।

तत्र हालकः अश्वम् एकत्र बद्ध्वा तृणानि खादयन् आसीत्।

चैतन्यः तत्रैव गत्वा "भवतः पत्न्याः पितृव्यस्य पुत्रः इति उक्त्वा भवान् अस्माकं शकटे चोरस्य अवकाशं दत्तवान् किल? यदा शकटः मार्गे पतितः, तदा सः दशसहस्रमूल्यां मुक्तावलीं अपहृत्य रिक्तां मञ्जूषां मम स्यूते स्थापितवान् अस्ति। इदानीमेव गत्वा तस्य हस्तात् मुक्तावलीम् आनयतु। न आनयति चेत्, भवतः मम गृहे प्रवेशः एव नास्ति" इति क्रोधेन गर्जितवान्।

चैतन्यस्य वचनं श्रुत्वा हालकस्य वज्राघातः इव अभवत्। सः नतमस्तकः भूत्वा मूकः इव तूष्णीं स्थितवान्। चैतन्यः पुनः तं भर्त्सयित्वा "इतः निर्गच्छतु" इति गर्हन् प्रतिनिवृत्तः। अनन्तरं हालकः धावन् गृहं गतवान्। तत्र तस्य कुटीरस्य पुरतः आगत्य पादाघातेन भूमिं कम्पयन् "भवत्याः मातृगृहीयाः सर्वे चोराग्रेसराः इति प्रतिभाति। सः कालेयः पितामहस्य अन्तिमदर्शनार्थं साहाय्यं याचितवान् इति शकटे तस्य स्थानं दत्तम्। सः तु अस्माकम् आर्यस्य बहुमूल्यां मुक्तावलीम् एव अपहृतवान्। भवती सद्यः गत्वा आभरणम् आनयतु। अन्यथा मम उद्योगः अपि नास्ति। अपकीर्तिः अपि जायते" इति उक्तवान्।

यदा पितामहस्य वार्तां श्रुतवती, तदा



हालकस्य पत्नी मुक्तावलीविषयमेव विस्मृत्य "हा हन्त ! मम पितामहस्य परिस्थितिः एवम् अस्ति वा !' इति प्रलापं कुर्वती पितामहस्य गृहं प्रति धावितवती ।

चैतन्यः पादवेदनया मन्दं मन्दं यदा पुनः स्वगृहस्य समीपम् आगतवान्, तदा भानुमत्याः सखी गृहात् बहिः आगतवती । तस्याः हस्ते एका लघुमञ्जूषा आसीत् ।

अनन्तरं भानुमती बहिः आगत्य चैतन्यस्य पार्श्वे स्थित्वा गच्छन्तीं सखीं दर्शयित्वा–"एषा एव मम सखी । सा अपि स्वीयम् उपायनं श्वः एव दर्शयिष्यामि इति उक्तवती । भवान् रिक्तां मञ्जूषाम् आनीतवान् इति वक्तुं शक्यते वा ? भवतु, तत्सर्वम् अनन्तरं चिन्तयामः । इदानीं भवतः पादे तैललेपनं करोमि । किमर्थं क्रोधेन यं कञ्चित् निन्दितवान् ?" इति उक्तवती ।

पत्न्याः मधुरवचनं श्रुत्वा चैतन्यस्य वेदना, चिन्ता, क्रोधः च न्यूनाः अभवन् । तया सह अन्तः गत्वा मार्गे जातं सर्वं वृत्तान्तं कथितवान् ।

परेद्युः प्रातः हालकः मुक्तावलीम् आनेष्यति इति तं निरीक्षमाणः चैतन्यः गृहस्य पुरतः उपविष्टः आसीत् । तदा पूर्वेद्युः नगरे यस्य आपणे चैतन्यः मुक्तावलीं क्रीतवान्, सः आपणिकः तत्र आगत्य "भोः महाशय ! क्षमा अस्तु । ह्यः अस्माकम् आपणस्य भृत्यः अजागरूकतया रिक्तां मञ्जूषां भवतः हस्ते दत्तवान् । एषः दोषः रात्रौ ज्ञातः" इति उक्त्वा मुक्तावलीमञ्जूषां चैतन्यस्य हस्ते दत्तवान् ।

आपणिकस्य प्रामाणिकतां दृष्ट्वा चैतन्यः अतीव सन्तुष्टः । सः आपणिकं "भोजनं कृत्वा गच्छतु" इति प्रार्थितवान् । किन्तु आपणिकः कार्यान्यरम् अस्ति इति उक्त्वा तथैव प्रतिनिवृत्य गतवान् ।

इदानीं चैतन्यः हालकं पुनः पुनः स्मरन् सन्तोषेण पत्नीम् आकारितवान् । तदा एव भयेन विवर्णः हालकः तत्र आगतवान् ।

चैतन्यः तं दृष्ट्वा "भयं मास्तु हालक ! शीघ्रम् आगच्छतु । किमर्थं एवं विलम्बं कृत–वान् ?" इति पृष्टवान् । तदा आश्चर्यचकितं तं

प्रति पुनः "सा मुक्तावली कालेयस्य हस्ते नास्ति भोः । वृथा अहं तद्विषये सन्देहं प्रकटितवान् । सा मुक्तावली आपणे एव आसीत् । इदानीम् एव आपणिकः आगत्य तां मुक्तावलीं दत्तवान् । भवान् निश्चिन्तः भूत्वा पूर्ववत् स्वकीयं कार्यं करोतु" इति उक्तवान् ।

तदा हालकः अञ्जलिपूर्वकं चैतन्यं नमस्कृत्य "आर्य, कालेयः हारं चोरितवान् इति भवतः वचनेन अस्माकम् अपि शुभम् एव जातम्" इति उक्तवान् ।

"कथम्? कीदृशं शुभम्?" इति चैतन्यः आश्चर्येण पृष्टवान् ।

"अहं कुटीरं गत्वा मम पत्नीं तस्याः पितामहस्य गृहं प्रति प्रेषितवान् । मरणसमये पितामहः स्वीयां सम्पत्तिं दद्यात् इति आशया एव कालेयः तत्र गतवान् आसीत् ।
तथा किमपि नास्ति इति यदा वृद्धः उक्तवान्, तदा तं निन्दन् कालेयः प्रतिनिवृत्तः । मम पत्नी तु तत्रैव स्थित्वा प्रातःपर्यन्तं पितामहस्य सेवां कृतवती । तदा वृद्धस्य सम्भाषणशक्तिः अपि अतीव क्षीणा आसीत् । यथाकथञ्चित् स्वीयधनस्य गुप्तस्थानं उक्तवान् । स्वस्य मरणानन्तरम् उत्तरक्रियादिसंस्कारः मया एव कर्तव्यः इति सूचितवान् अस्ति" इति हालकः उक्तवान् ।

तदा चैतन्यः मनसि 'अहं कालेयस्य विषये सन्देहं प्रकटितवान् । तेन हालकस्य लाभः एव जातः' इति चिन्तयन् "भोः हालक! भवान् भाग्यवान् अस्ति । तस्य वृद्धस्य महती सम्पत्तिः स्यात् किल?" इति पृष्टवान् ।

"अस्ति, आर्य! तेन धनेन स्वतन्त्ररूपेण वाणिज्यम् अपि कर्तुं शक्यते" इति हालकः उक्तवान् ।

एतादृशं हालकं गतदिने अहं वृथा निन्दितवान् इति चैतन्यः दुःखितः अभवत् । सः हालकं प्रीत्या पश्यन्–'यथाकथञ्चित् मुक्ताहारेण भवतः मम च कल्याणमेव अभवत् । भवतः सम्पत्तिलाभेन मम महान् सन्तोषः जातः । भवतः वाणिज्ये यत् किमपि साहाय्यम् अपेक्षितं भवति चेत्, विना सङ्कोचं मां पृच्छतु' इति उक्तवान् ।



# धर्मकार्याणि

नागपुरस्थः चन्द्रगुप्तः इति कश्चित् वणिक् समुद्रमार्गेण रत्नवाणिज्यम् अपि करोति स्म। सः अतीव कृपणः। धर्मकार्यार्थं किञ्चिदपि न ददाति स्म।

एवं सत्यपि सः ''अहं कृपणः इति मा भावयन्तु। दानधर्मादिसत्कार्याणि कर्तुं भविष्यत्काले मम महान् अवकाशः अस्ति एव'' इति पुनः पुनः वदति स्म।

एकदा कश्चित् अर्चकः चन्द्रगुप्तस्य समीपम् आगत्य ''शिथिलस्य देवालयस्य परिष्कारं कर्तुं धनसाहाय्यं करोतु'' इति प्रार्थितवान्। धनं दातुं चन्द्रगुप्तस्य इच्छा न आसीत्। तथापि अर्चकस्य विषये करुणया शतदीनारान् आनीय दत्तवान्।

तस्मिन्नेव समये चन्द्रगुप्तस्य लिपिकारः धावन् तत्र आगतवान्। 'चण्डमारुतेन भवतः नौका बहुमूल्यवस्तुभिः सह समुद्रतलं प्राप्तवती'' इति दुर्वार्ता उक्तवान् च।

तदा चन्द्रगुप्तः अर्चकं दृष्ट्वा ''अन्यथा न भावयतु'' इति सम्प्रार्थ्य साहाय्यार्थं दत्तान् शतदीनारान् पुनः गृहीत्वा प्रकोष्ठस्य अन्तः गतवान्। इदानीं सन्दर्भः अनुकूलः नास्ति इति चिन्तयन् अर्चकः प्रतिगन्तुं उद्युक्तः। तदा चन्द्रगुप्तः पुनः बहिः आगत्य सहस्रदीनारयुक्तां ग्रन्थिम् अर्चकस्य हस्ते दत्वा उक्तवान्- ''यदा सम्पत्तिः अस्ति तदा एव सत्कार्यम् अवश्यं करणीयम् इति भगवान् मां पाठयन् अस्ति'' इति।






# सूक्ष्मदृष्टिः

एकस्मिन् ग्रामे शङ्करः हरिः इति मित्रद्वयम् आसीत् । शङ्करः धनवान् कृषीवलः च । सः शङ्करः धान्यानां विक्रयणम् अपि करोति स्म । तस्य समीपे राघवः इति एकः लिपिकारः आसीत् ।

तस्मिन् ग्रामे शङ्करः एव धनवान्, सर्वेषाम् आदरपात्रं च आसीत् । अतः तस्य समीपम् अनेके जनाः किमपि कार्यार्थम् आगच्छन्ति । शङ्करस्य पुरतः बहु विनयम् आदरभावं च प्रदर्शयन्ति । किन्तु लिपिकारः राघवः तु यजमानस्य समीपे विनयं न प्रदर्शयति । अपि च यजमानः किमपि पृच्छति चेत् तत्क्षणमेव उत्तरं दत्वा कार्यमग्नः भवति । एतत् सर्वं शङ्करस्य गृहंगतः हरिः बहुवारं दृष्टवान् ।

एकदा हरिः मासद्वयं तीर्थपर्यटनार्थं गतवान् । सः बहूनि तीर्थक्षेत्राणि दृष्टवान् । सर्वत्र तीर्थेषु स्नानादिकं कृत्वा देवदर्शनं कृतवान् । मासद्वयानन्तरं स्वग्रामं प्रत्यागतवान् । स्वकीयतीर्थयात्रायाः सर्वं वृत्तान्तं शङ्कराय निवेदयितुं तस्य बहु इच्छा आसीत् । अतः सः तद्दिने सायङ्काले एव शङ्करस्य गृहं गतवान् । तस्मिन् समये राघवः यजमानेन सह वार्तालापं कुर्वन् आसीत् । किन्तु राघवः पूर्ववत् न आसीत् । यजमानस्य पुरतः अञ्जलिं बध्द्वा "आज्ञापयतु स्वामी । महान् अनुग्रहः" इत्यादि वदति स्म । एतत् दृष्ट्वा हरेः बहु आश्चर्यं जातम् ।

राघवस्य गमनानन्तरं हरिः शङ्करेण सह वार्तालापं कुर्वन् लिपिकारस्य विषयं पृष्टवान् । "भोः, मासद्वये राघवः बहु परिवर्तितः । पूर्वं सः एवं विनयं न कदापि प्रदर्शितवान् । इदानीं आगतान् सर्वान् दृष्ट्वा स्वयं शिक्षितः इति मन्ये ।"

शङ्करः किमपि अनुक्त्वा विहस्य तूष्णीम् अभवत्। कतिपयदिनानन्तरं हरिः पुनः मित्रस्य गृहं गतवान्। तत्र अन्यः लिपिकारः आसीत्।

हरिः तं दृष्ट्वा आश्चर्येण "राघवस्य स्थाने अन्यः अस्ति किल ? राघवः विरामं स्वीकृतवान् वा ?" इति शङ्करं पृष्टवान्।

शङ्करः उक्तवान्– "न, मया राघवः निष्कासितः। एषः नूतनः लिपिकारः।"

हरिः आश्चर्येण पृष्टवान्- "किमर्थम् ? पूर्वं तु सः बहु अविधेयः आसीत्। अहं गतसप्ताहे दृष्टवान् यत् राघवः बहु विधेयः आसीत्, विनीतः च आसीत्। अतः मम तु तदा बहु सन्तोषः जातः।"

"एतदेव राघवस्य निष्कासने कारणम्" इति शङ्करः विहस्य उक्तवान्। एतत् श्रुत्वा आश्चर्यचकितः हरिः" किं भोः! एवं वदति ? पूर्वं राघवस्य रीतिः न समीचीना आसीत्। ग्रामे सर्वेऽपि भवतः आदरभावं विनयं च प्रदर्शयन्ति स्म। किन्तु राघवः न तथा आसीत्। इदमिदानीं सः परिवर्तितः आसीत् किल ?" इति पृष्टवान्।

"सत्यं, राघवस्य एतादृशी रीतिः एव मम संशयस्य कारणम्। किमर्थं सः एवम् अतिविनयं प्रदर्शयति ? इति मया विचारितम्। तदा विषयः ज्ञातः। राघवः कार्ये समर्थः। सेवकवत् मम पुरतः विनयप्रदर्शनं न आवश्यकम् आसीत्। किन्तु एषु दिनेषु सः मम पुरतः नमस्कारादिकं कृत्वा अतिविनयेन वार्तालापं करोति स्म। अहम् अन्ते विचार्य विषयं ज्ञातवान् यत् मम समीपे ये ये कार्यार्थम् आगच्छन्ति, तेषां समीपतः सः उत्कोचं स्वीकरोति इति। एतत् ज्ञात्वा अनुक्षणमेव मया सः निष्कासितः" इति शङ्करः उक्तवान्।

एतत् श्रुत्वा हरिः तस्य वचने सत्यांशं ज्ञात्वा मित्रस्य बुद्धिमत्तां बहुधा प्रशंसितवान्।





# विष्णुकथा

शकुनिः गान्धारदेशराजस्य सुबलस्य पुत्रः। दुर्योधनस्य माता गान्धारी शकुनेः अग्रजा।

ज्यौतिषिकाः राजानं सुबलं सूचितवन्तः आसन् यत् विवाहसमनन्तरम् एव गान्धार्याः पतिः मृतः भविष्यति इति। अतः सुबलः कस्यचित् अजस्य गान्धार्याः च विवाहं प्रथमं कारितवान्। अनन्तरं जन्मान्धेन धृतराष्ट्रेण सह तस्याः विवाहः अभवत्। जातकफलम् सत्यम् अभवत्। अल्पे एव काले सः अजः मृतः।

यदा विवादसमये भीमः ''विधवापुत्र! गोलक!'' इति सम्बोधितवान् तदा एव दुर्योधनः पूर्वोक्तं विषयं ज्ञातवान्।

एतेन दुर्योधनः कुपितः। सुबलं शकुनिं तत्क्षणे एव कारागारे स्थापितवान्। क्रूरदण्डनैः तौ दण्डयित्वा मनःसन्तोषं प्राप्तवान्।

सुबलः तपोबलेन अपूर्वशक्तिं सम्पादितवान् आसीत्। मरणतः पूर्वं सः शकुनिम् उक्तवान्- ''मम मरणानन्तरं मदीयैः अस्थिभिः अक्षान् कारयतु'' इति।

दुर्योधनः कारागारस्य रक्षकाणां द्वारा, शकुनिसमीपे स्थितानाम् अद्भुतमहिम- शालिनाम् अक्षाणां विषयं ज्ञातवान्। तद्दिने एव शकुनेः बन्धविमोचनं जातम्। शकुनिः मन्त्रिपदे नियोजितः च।

हस्तिनापुरे शकुनि- युधिष्ठिरयोः मध्ये द्यूतं प्रवृत्तम्। द्यूते युधिष्ठिरः पराजितः।



तथैव स्वसहोदरान्, पत्नीं द्रौपदीं च पणीकृत्य तत्रापि पराजयं प्राप्तवान्।

अस्मिन् एव समये द्वारकायां कृष्णः विनोदार्थं द्यूतं क्रीडन् पराजितः। रुक्मिण्यादि-सप्तपत्न्यः अपि तत्समये पणत्वेन स्थापिताः आसन्।

परिहसन्ती सत्यभामा रुक्मिणीम् उक्तवती- "भगिनि ! अस्मदीयःनाथः भवत्यः च इदानीं मम अधीनाः। इदानीं भवताम् उपरि मम सर्वाधिकारः अस्ति। विक्रयणं दानं वा यत्किमपि अहं कर्तुम् शक्नोमि" इति। अनन्तरं रुक्मिण्याः अञ्चलम् स्वहस्ते गृहीतवती।

तदानीं श्रीकृष्णः अन्यत्र आसक्तः इव "अक्षया भवतु" इति उक्तवान्।

कृष्णस्य मुखतः एतत् शब्दद्वयं अपि किमर्थं निर्गतम् इति कया अपि न ज्ञातम्।

अस्मिन् समये हस्तिनापुरे सभायां दुश्शासनः द्रौपद्याः वस्त्रापहरणं कर्तुं प्रवृत्तः आसीत्। असहाया द्रौपदी आत्मानः मानं रक्षितुम् असमर्था, करद्वयं योजयित्वा भक्त्या "श्रीकृष्ण !" इति कृष्णनाम स्मृतवती।

अस्यां सभायां भीमः प्रतिज्ञां कृतवान् यत्– "दुःशासनस्य उरःस्थलं विभिद्य रक्तं पिबामि। तथैव दुर्योधनस्य ऊरुभङ्गं करोमि" इति।

कृष्णस्य वरप्रसादतः द्रौपद्याः शाटिका अक्षया जाता। यथा यथा दुःशासनः शाटिकाम् आकर्षति तथा तथा सा दीर्घा भविष्यति! सभायां शाटिका राशिरूपेण पतिता। दुःशासनः वस्त्रापहरणेन श्रान्तः। स्वेदजलेन आर्द्रीभूतः सःतत्रैव भूमौ पतितः।

पूर्वं मयसभायां दुर्योधनस्य भ्रान्त्याकृतं विपरीतं व्यवहारं दृष्ट्वा द्रौपदी उच्चैः हसितवती आसीत्। तदा एव दुर्योधनः द्रौपद्याः अपमानं करोमि एव इति प्रतिज्ञां कृतवान् आसीत्।

इदानीं तु, वस्त्रापहरणे सः असफलः। एतेन लज्जितः सः सभाभवनतः निर्गतः।

कर्ण-शकुनि- दुःशासनादयः अपि तम् अनुसृत-वन्तः ।

दुर्योधनः, शकुनिः, कर्णः, दुश्शासनः इति एते चत्वारः दुष्टचतुष्टयत्वेन ख्याताः आसन् ।

क्रोध-लोभ-मद-मत्सरादि-दुर्गुणानां तथा अधर्मस्य च आकरः कलिपुरुषः दुर्योधन-रूपेण जन्म प्राप्तवान् आसीत् ।

नरनारायणाभ्यां सह प्रवृत्ते युद्धे सहस्रकवचेन, अवशिष्टेन अन्तिमकवचेन सह पलायनं कृत्वा सूर्यमण्डले आश्रयः प्राप्तः आसीत् । अनन्तर-काले सः अविवाहितायाः कुन्तीदेव्याः उदरे सूर्यस्य वरप्रसादेन कर्णरूपेण जन्म प्राप्तवान् ।

कुन्ती यदा पाण्डुराजस्य पत्नी जाता, तदा नरनारायणयोः अन्यतरः नरः कुन्तीदेव्याः गर्भतः अर्जुनरूपेण जन्म प्राप्तवान् ।

नारायणः तु साक्षात् कृष्णः एव । अर्जुनः कृष्णस्य पितृष्वसुः पुत्रः ।

अविवाहिता कुन्ती कर्णं जले त्यक्तवती आसीत् । स च शिशुः सूतपत्न्या राधया प्राप्तः । सा कर्णस्य पालनं पोषणं च कृतवती ।

अतः एव कर्णस्य 'सूतपुत्रः' इति 'राधेयः' इति च नाम । दुर्योधनः कर्णम् अङ्गदेशस्य आधिपत्ये नियोजितवान् । एतेन कर्णस्य आत्म-ग्लानिः दूरङ्गता । आत्मनि विश्वासः दृढः जातः । कर्णविषये दुर्योधनस्य महती श्रद्धा ।



सः कर्णस्य मैत्रीं गौरवास्पदं मन्यते स्म ।

कर्णः बहुधा शापैः पीडितः आसीत् । दानशूरः सः ब्राह्मणयाचक–रूपेण आगताय इन्द्राय स्वकीयं कवचकुण्डलादिकं दत्तवान् एव । तथापि स्वशक्तिविषये अचलं विश्वासं प्रदर्शयन् कर्णः दुर्योधनं सर्वदा प्रोत्साहितवान् ।

''प्रतिद्वन्द्वी अर्जुनः जेतव्यः'' इत्येव कर्णस्य इच्छा आसीत् । अतः सः दुर्योधनस्य पक्षम् आश्रितवान् ।

द्यूते पराजिताः पाण्डवाः वनवासार्थं निर्गताः ।

द्यूते विजितवती सत्यभामा, कृष्णं नारदाय दानरूपेण दत्वा 'पुण्यक'व्रतम् आचरितवती । तदा नारदः उक्तवान्– ''कृष्णस्य यावान् भारः



अस्ति तावान्मितानि सुवर्ण-रत्नानि दत्तानि चेत् कृष्णं प्रत्यर्पयामि'' इति ।

सत्यभामा एतत् अङ्गीकृतवती। स्वकीयानि स्वर्णाभरण-रत्नहारादीनि सर्वाणि तुलायां स्थापितवती । तथापि कृष्णः एव भारायते ! तदा रुक्मिणी भक्त्या एकं तुलसीपत्रं तुलायां स्थापितवती । तदानीं भारः समः अभवत् । कृष्णः नारदात् मुक्तः ।

तदा सत्यभामा रुक्मिणीम् उक्तवती— ''भगिनि ! अद्य आरभ्य अहं भवत्याः दासी । ''श्रीकृष्णः भक्तानाम् अधीनः'' इत्येतत्सत्यम् अद्य भवती ज्ञापितवती । बहुधा उपकृता अहम्'' इति ।

द्रौपदीसहिताः पाण्डवाः मत्स्यदेशे विराटराजस्य आस्थाने अज्ञातवासम् आचरितवन्तः ।

तत्र भीमः वललनाम्ना पाचककार्यं कृतवान् । द्रौपदी सैरन्ध्रीरूपेण राज्ञ्याः दासी जाता । ताम् अपमानयन्तं कीचकं भीमः मारितवान् । एवं समवलेषु पञ्चसु त्रयः भीमस्य हस्तात् एव मृताः । इतःपरं केवलं दुर्योधनः एकः अवशिष्टः ।

बृहन्नलानाम्ना अर्जुनः राजकुमारीम् उत्तरां नृत्यं पाठितवान् । उत्तरगोग्रहण-समये अर्जुनः निजरूपं प्रदर्शयन्, युद्धे असङ्ख्यमहारथिनः अपि निरायासं जितवान् ।

श्रीकृष्णः यदा कंसं मारितवान्, तदा कालनेमिः कंसस्य शरीरं त्यक्त्वा अभिमन्युरूपेण सुभद्रायाः गर्भतः जन्म प्राप्तवान् ।

कालनेमिः इदानीं कृष्णस्य बन्धुरूपेण जन्म प्राप्तवान् अस्ति । अतः कृष्णः चिन्तयति स्म यत् 'अभिमन्युः युववीराणाम् आदर्शः भूत्वा शाश्वतं यशः प्राप्नोतु' इति ।

यदा सुभद्रा गर्भवती आसीत् तदा एकस्मिन् दिने अर्जुनः सुभद्राम् उद्दिश्य युद्धे पद्मव्यूहः कथं भेदनीयः ? इति रहस्यं वदन् आसीत् । तदा तत्र आगतः कृष्णः अर्जुनम् उक्तवान्— ''अये, अर्जुन ! मम भगिन्याः मनः अतीव कोमलम् । तत्रापि गर्भिणी एषा । एतादृश्याः पुरतः किमर्थं वा युद्धरङ्गस्य वार्तां निवेदयति ?'' इति । अनन्तरं कार्यान्तरव्याजेन अर्जुनम् अन्यत्र नीतवान् ।



गर्भस्थः अभिमन्युः अर्जुनस्य सर्वाणि वचनानि श्रुतवान् आसीत्। अतः पद्मव्यूहं प्रवेष्टुं सः ज्ञातवान्। किन्तु पद्मव्यूहतः बहिः आगन्तुं रहस्यं ज्ञातुं न शक्तवान्।

यौवनमदभरितः अभिमन्युः कदाचित् धर्मराजं वदन् आसीत्–"मातुलः कृष्णः इदानीम् अत्र न स्यात् नाम। तथापि इदं राज्यम् अस्मदीयम् एव। कौरवान् सर्वान् मारयितुम् अहम् एकः एव पर्याप्तः" इति।

तदा तत्र आगतः कृष्णः एतद्वचनं श्रुत्वा उक्तवान्– वीर! अभिमन्यो! भवतः शौर्यम् असदृशम्। भवादृशस्य वीरस्य कीर्तिः चिरकालं स्थास्यति। माता सुभद्रा मदीया भगिनी अस्तीति कृत्वा अहम् अपि आनन्दं गर्वं च अनुभवामि" इति।

सुभद्रार्जुनयोः पुत्रस्य अभिमन्योः विवाहः उत्तरया सह सम्पन्नः। पाण्डवानां वनवाससमये सुभद्रा अभिमन्युः च द्वारकायाम् एव स्थितवन्तौ।

बलरामः स्वपुत्र्याः शशिरेखायाः विवाहं, दुर्योधनस्य पुत्रेण लक्ष्मणेन सह कर्तुं निश्चितवान्। अभिमन्यवे उत्तरा यत् दत्ता तत्र बलरामस्य विरोधः आसीत्।

कदाचित् अभिमन्युः स्वमात्रा सह द्वारकातः निर्गतः अरण्यमार्गेण कुत्रापि गच्छन् आसीत्। मार्गे हिडिम्बा-भीमसेनयोः पुत्रः घटोत्कचः मिलितः।

घटोत्कचः शशिरेखायाः विवाहस्थलं गतवान्। तत्र स्वमायया वरपक्षीयान् सर्वान् पीडितवान्। अनन्तरं शशिरेखाम् उन्नीय गतवान्। अभिमन्युना सह शशिरेखायाः विवाहं कारितवान्।

पाण्डवानाम् अज्ञातवासः सफलतापूर्वकं समाप्तः। अनन्तरं कौरवाणां नाशार्थं पाण्डवाः, पाण्डवानां समूलनाशार्थं कौरवाश्च सिद्धाः जाताः। कौरव–पाण्डवयोः युद्धं निश्चितम्।

कदाचित् युद्धार्थं साहाय्यं प्रार्थयमानः अर्जुनः कृष्णस्य समीपम् आगतवान्। तदा दुर्योधनः अपि तेन एव उद्देशेन तत्र आगतवान्। निद्रातः जागरितः कृष्णः पादसमीपे उपविष्टम् अर्जुनं दृष्टवान्। अनन्तरं शिरसः



पार्श्वे उपविष्टस्य दुर्योधनस्य उपरि दृष्टिं प्रसारितवान् ।

कृष्णः द्वौ अपि उद्दिश्य उक्तवान्- "युद्धे अहम् अस्त्रशस्त्रादीनि न गृह्णामि । एकाकी सन् अहम् उभयोः अन्यतरस्य पक्षं प्रवेष्टुं शक्नोमि । अन्यपक्षे च समग्रा यादवसेना तिष्ठति। अहं प्रथमम् अर्जुनं दृष्टवान् । अतः सः एव प्रथमं स्वकीयम् इच्छां प्रकटयतु" इति ।

अर्जुनः "कृष्णः एव मम पक्षे भवतु" इति उक्तवान् । "समग्रा यादवसेना मम पक्षे भविष्यति" इति सन्तुष्टः दुर्योधनः ततः निर्गतः ।

सञ्जयः धृतराष्ट्रस्य आदेशानुसारं दूतरूपेण पाण्डवानां समीपम् आगतवान् । युद्धेन उभयपक्षस्य अपि हानिः एव । सन्धिः एव गरीयान्" इति उपदेशवाक्यानि उक्तवान् ।

पाण्डवाः श्रीकृष्णं दूतरूपेण प्रेषितवन्तः । कौरवसभायां कृष्णः उक्तवान्– "अर्धराज्यं न दीयते चेत् मास्तु नाम । न्यूनातिन्यूनं इन्द्रप्रस्थादि- पञ्चग्रामान् वा ददातु । उभयोः पक्षयोः मध्ये शान्तिः स्थापनीया इति उद्देशेन अहम् आगतवान्। दायादकलहः राष्ट्रस्य नाशाय भवेत् । अतः यथाकथञ्चित् सन्धिः अङ्गीकरणीयः" इति ।

दुर्योधनः कृष्णस्य हितवचनानि तिरस्कृतवान् । सः स्पष्टवचनैः उक्तवान् यत् "पञ्चग्रामाः किं, सूच्यग्रमिता भूमिः अपि पाण्डवानां कृते न दीयते" इति ।

तदा श्रीकृष्णः कौरवसभाम् उद्दिश्य गम्भीरवाण्या उक्तवान्- "अहम् अर्जुनस्य सारथिः भविष्यामि । तस्य रथस्य उपरि आञ्जनेयचित्राङ्किता पताका विलसिष्यति । अर्जुनः गाण्डीवधनुषं हस्ते गृहीत्वा सर्वान् भवत्पक्षीयान् तृणवत् छेत्स्यति । तदानीं भवतां पक्षे कर्णसदृशाः दशसहस्राणि महारथिनः भवन्तु नाम । तथापि युद्धरङ्गं प्रविष्टः भवदीयः यः कोऽपि ततः सजीवं न निर्गमिष्यति । इति तु निश्चितम् एव । अतः इदानीम् एवं जागरिताः भवन्तु" इति ।

कृष्णस्य वचनानि श्रुत्वा कुपितः दुर्योधनः

गर्जितवान्–'रे कृष्ण ! दूतरूपेण आगतः भवान्, इदानीं पाण्डवानां पक्षस्य शौर्यं प्रशंसन् अस्मान् निन्दति वा ? कियत् धैर्यं भवतः ? अहम् इदानीं भवन्तं रज्ज्वा बद्ध्वा स्थापयामि । कः भवन्तं विमोचयति इति पश्यामि' इति ।

एवं वदन् दुर्योधनः रज्जुं गृहीत्वा आगतवान् । एतत् दृष्ट्वा कृष्णेन सह आगतः सात्यकिः कोपेन खड्गं बहिः आकृष्टवान् ।

तदा कृष्णः सात्यकिं समाश्वस्य दुर्योधनम् उक्तवान्– ''सन्धिं सम्पादयितुम् इच्छन् अहं दूतरूपेण रिक्तहस्तः आगतवान् । एतादृशस्य मम बन्धनम् अनुचितम् । भवतः पक्षः बलशाली अस्ति । अहं तु एकाकी । यदि मां बन्धयितुम् इच्छति, तर्हि तथा करोतु नाम'' इति ।

अनन्तरं दुष्टचतुष्टयेन कृष्णं परितः आगत्य तं बन्धयितुं चेष्टा कृता । तदा कृष्णः स्वमहिमानं प्रदर्शयन् विश्वरूपं धृतवान् । एतत् दृष्ट्वा भीताः दुर्योधनादयः ततः पलायितवन्तः ।

सामदानादिभिः उपायैः कृष्णः कौरवपाण्डवयोः मध्ये सन्धिं सम्पादयितुं यत् प्रयत्नं कृतवान् तत् असफलं जातम् । अन्ते अनिवार्यतया युद्धं घोषितम् ।

स्वकीयेन समस्तसेनाबलेन सह सर्वे राजानः कुरुक्षेत्रे सम्मिलिताः । उभयपक्षे अपि युद्धस्य सिद्धता विशेषतया प्रवृत्ता आसीत् । रथानां घण्टानादैः, सैनिकानां जयघोषैः, रणवाद्यानां शब्दैः च रणरङ्गं व्याप्तम् ।

सञ्जयः दिव्यदृष्टिं प्राप्तवान् आसीत् । तद्द्वारा सः धृतराष्ट्रस्य पुरतः कुरुक्षेत्रयुद्धस्य समग्रं चित्रणं करोति स्म । जन्मान्धः पुत्रप्रेमवशीभूतः च कौरवचक्रवर्ती धृतराष्ट्रः युद्धं निवारयितुम् असमर्थः आसीत् । सः सञ्जयस्य वचनानि श्रृण्वन् मौनम् उपविष्टः ।

पतिः अन्धः इति कृत्वा स्वयम् अपि नेत्रयोः बन्धनं कृतवती गान्धारी धृतराष्ट्रस्य पार्श्वे आसीत् । पुत्राणां विनाशस्य सम्भावनया व्यथिता सा अपि मौनं युद्धवार्तां श्रृणोति स्म ।





# विचित्रविवाहः

यरवान् इति नगरम्, अब्दुल्नयाजनामकः नवाबः परिपालयति स्म। तस्य केवलम् एका एव पुत्री। अतः नवाबः तां सकलविद्यासु परिणतां कारितवान्। बाल्यतः एव युद्धविद्यायाम् अपि सा शिक्षणं प्राप्तवती। यदा प्रौढा जाता, तदा सा पुरुषाणाम् अपेक्षया शूरतमा कन्या अभवत्।

इदानीं नवाबः पुत्र्याः विवाहप्रयत्ने उद्युक्तः। तं विषयं ज्ञात्वा तस्य पुत्री "तात, यं कञ्चित् राजकुमारम् आनीय तेन सह मम विवाहं भवान् करोति इति प्रतिभाति। तथा मास्तु। मम सदृशं युद्धादिविद्यानिपुणं तरुणम् एवअहम् इच्छामि। तावदेव न, यः माम् अपि अतिरिच्य वर्तते, तादृशः एव मम अनुरूपः इति भावयामि" इति उक्तवती।

"तत् तु युक्तम् एव। किन्तु तादृशस्य अन्वेषणं कथं करणीयम्? यथाकथञ्चित् एकः शूरतमः मिलेत्। किन्तु वयसा रूपेण च भवत्याः अनुरूपः खलु अपेक्षितः?" इति नवाबः आश्चर्येण पृष्टवान्।

तदा नवाबपुत्री 'तत् तु बहु अल्पं कार्यम्। अश्वारोहणं, खड्गयुद्धम् इत्यादिवीरविद्यासु मया सह तेषां स्पर्धा भविष्यति। तदा अहं तेषां योग्यतां ज्ञातुम् शक्नोमि। यः मां पराजितां करोति, तेन सह मम विवाहः भविष्यति" इति उक्तवती।

नवाबः क्षणद्वयं आलोच्य एतदर्थं सर्वत्र उद्घोषणं कारयितुं शक्यते। तत्र क्लेशः नास्ति। किन्तु स्वीयभाग्यपरीक्षां कर्तुम् अनर्हाः अपि यदि स्पर्धार्थम् आगच्छन्ति, तर्हि का गतिः?" इति पृष्टवान्।

"तदपि मया चिन्तितम्। स्पर्धायां पराजितस्य अश्वः आयुधानि च मम वशीभूतानि भवन्ति। तावदेव न, पराजितस्य पृष्ठस्य उपरि



तप्तलोहेन मम नामधेयं लेखयामि। एषः स्पर्धा-नियमः'' इति नवाबपुत्री धैर्येण उक्तवती।

नवाबः पुत्र्याः अभिप्रायम् अङ्गीकृत्य तस्याः वचनानुसारेण उद्घोषणं कारितवान्।

एकः सप्ताहः अतीतः। अनन्तरम् अनेके राजपुत्राः यरवान् नगरं आगतवन्तः। नवाब-पुत्र्या सह स्पर्धाः प्रचलिताः। अश्वारोहणं, बाणप्रयोगः, खड्गयुद्धम् इत्यादिषु ते सर्वे सम्पूर्णतया पराजिताः। स्पर्धानियमम् अनुसृत्य तेषां पृष्ठानाम् उपरि तप्तलोहेन नवाब-पुत्र्याः नामधेयं लेखितम्।

एकदा पर्षियाराजकुमारः नवाबस्य दर्शनार्थं यरवान् नगरम् आगतवान्। नवाबः आदरपूर्वकं तं सत्कृत्य, ''भवान् विशालराज्यस्य उत्तराधिकारी अस्ति। मम पुत्र्याः नियमान् जानाति खलु? स्पर्धायां भवतः पराभवं अहम् न इच्छामि। एते नियमाः यदि न स्युः, भवता सह मम पुत्र्याः विवाहं कुर्याम् एव। इदानीम् अहं भवन्तं केवलम् अतिथिरूपेण पश्यामि' इति दुःखभावेन उक्तवान्।

''एतावद् दूरं आगत्य भवतः पुत्र्या सह युद्धादिस्पर्धासु भागम् अगृहीत्वा तथैव प्रति-गच्छामि चेत्, तेन मम इतोऽपि अधिकः पराभवः भवेत्। अतः स्पर्धा भवतु'' इति उक्तवान् पर्षियाराजकुमारः।

तदा अनिच्छन् अपि नवाबः स्पर्धाम् आयोजितवान्। नवाबपुत्री पर्षियाराजकुमारः च अश्वम् आरुह्य खड्गयुद्धं कर्तुं उद्युक्तौ। अल्पे एव काले 'पर्षियाराजकुमारः बहुप्रवीणः चतुरतमः च'' इति नवाबपुत्री ज्ञातवती। सः नवाबपुत्र्याः खड्गम् अपहर्तुं, अश्वस्य पृष्ठतः तां पातयितुम् अपि समर्थः आसीत्। तथापि नवाबपुत्र्याः विषये आदरभावेन सः तथा न कृतवान्। एतं विषयम् अपि सा ज्ञातवती।

एवं सत्यपि तावतां प्रेक्षकाणां पुरतः परा-जयम् अङ्गीकर्तुं तस्याः इच्छा न अभवत्। सा अतीव अभिमानिनी आसीत्। तदा सा किञ्चित् विचार्य एकं उपायं कृतवती। सहसा



सा स्वीयं मुखवस्त्रम् अपसार्य राजकुमारं दृष्ट्वा किञ्चित् इव हसितवती।

तदा विद्युत् इव स्फुरितं तस्याः अद्भुत-सौन्दर्यं दृष्ट्वा पर्षियाराजकुमारः क्षणकालपर्यन्तं मन्त्रमुग्धः इव अभवत्। एवं रीत्या यदा सः किञ्चित् अजागरूकः जातः, तदा नवाबपुत्री तस्य उपरि आक्रमणं कृतवती। तेन राज-कुमारस्य खड्गः तस्य हस्ततः च्युतः। तथा सः अपि अश्वात् अधः पतितवान्।

भूमौ पतितः राजकुमारः अवमामेन क्रोधेन च पुनः उत्थितवान्। किन्तु तत्क्षणमेव चत्वारः सेवकाः आगत्य तं बध्द्वा, तस्य पृष्ठस्य उपरि नवाबपुत्र्याः नामधेयं तप्तलोहेन लेखितवन्तः।

तदा महता क्रोधेन तप्तः राजकुमारः 'एतस्य अवमानस्य युक्तः प्रतीकारः करणीयः' इति मनसि चिन्तयन्, किमपि अनुक्त्वा ततः निर्गतवान्।

एकः मासः अतीतः। नवाबपुत्री एकदा नगरस्य उद्यानवने सखीभिः सह विहरन्ती आसीत्। तदा एकत्र एकःवृद्धः उपविष्टः दृष्टः। तस्य पुरतः एकं वस्त्रं प्रसारितम् आसीत्। तस्य उपरि बहुमूल्यानि रत्नानि सुवर्णाभरणानि च स्थापितानि आसन्। नववपुत्री आश्चर्येण तस्य समीपं गत्वा 'बहु मनोहराणि सन्ति। किं विक्रयणार्थम् आनीतवान् वा?' इति पृष्टवती।

''न विक्रयणार्थम्। किन्तु विवाहार्थम्। या मां परिणेष्यति, सा एतत्सर्वं बहुमानरूपेण प्राप्नोति'' इति सः वृद्धः उक्तवान्।

तस्य प्रत्युत्तरं श्रुत्वा नवाबपुत्री तस्याः सख्यः च उच्चैः हसन्त्यः 'अस्मिन् वार्धक्ये कीदृशम् इदं विवाहचापल्यम्!'' इति उक्तवत्यः।

''अस्तु। इदं मम चापल्यम् इत्येव चिन्त-यन्तु। या मां परिणेष्यति सा सर्वदा मम पत्नी भवतु इति नियमः नास्ति। तस्य वृक्षस्य अधः एकः अश्वः अस्ति किल? तस्य उपरि मया सह सा निमेषमात्रम् उपविशति चेत्, आवयोः विवाहस्य विच्छेदनं भविष्यति। अनन्तरम् अत्र स्थापितानि सर्वाणि आभरणानि सा प्राप्नोति'' इति उक्तवान् सः वृद्धः।

तस्य वचनं श्रुत्वा नवाबपुत्री सखीः दृष्ट्वा 'भवतीषु या कापि एतं मिथ्याभूतं विनोद-



विवाहम् इच्छति वा ?' इति पृष्टवती ।

'आम् ! वयं सर्वाः अपि इच्छामः' इति ताः उक्तवत्यः । क्षणमात्रे तावद्धनं मिलति इति ताः सर्वाः आशाग्रस्ताः जाताः ।

नवाबपुत्र्याः आदेशानुसारम् एका सखी पुरतः आगतवती । तत्रैव किञ्चिद्दूरे एकः वृद्धः खाजी उपविष्टः आसीत् । प्रथमः वृद्धः करताडनं कृत्वा तम् आहूतवान् । सः खाजी वृद्धेन सह सख्याः, विवाहं कारितवान् ।

अनन्तरं वृद्धः सखीम् अश्वस्य उपरि उपवेश्य स्वयमपि तया सह उपविष्टवान् । ततः वृक्षं परितः द्विवारं सञ्चार्य सः अश्वतः अवतीर्णः । तत्क्षणं खाजी आगत्य मन्त्रपठनं कृत्वा 'विवाहविच्छेदः जातः' इति उक्तवान् । सा तत्र स्थापितानि रत्नाभरणानि गृहीत्वा प्रत्यागतवती ।

एवं रीत्या चतुर्दिनपर्यन्तं सः एव वृद्धः तेनैव क्रमेण तत्र उद्याने आगत्य, नवाबपुत्र्याः एकैकां सखीं परिणीय, उत्तरक्षणे एव विवाहविच्छेदनं कारयति स्म । सर्वाः अपि सख्यः यथेष्टम् आभरणानि लब्धवत्यः ।

पञ्चमदिने नवाबपुत्री उद्देशपूर्वकम् एकाकिनी एव उद्यानम् आगतवती । तदा सः वृद्धः पुरतः वस्त्रं प्रसार्य, तस्य उपरि स्थापितानि आभरणानि पश्यन् आसीत् । राजकुमारी यथा श्रुणुयात् तथा स्वगतभाषणम् इव वदति स्म "अद्य या भाग्यवती मम पत्नी भवति इति न अहं जानामि । अद्य तु अत्र स्थापितानाम् आभरणानां मूल्यं लक्षदीनाराः । एतादृशभाग्यवती का स्यात् ? पश्यामः" इति ।

तस्य वचनं सत्यम् एव आसीत् । अद्य आभरणानि नक्षत्राणि इव प्रकाशन्ते स्म । नवाबपुत्री तानि दृष्ट्वा अतीव उत्सुका जाता । सा वृद्धस्य पुरतः आगत्य 'अद्य अहं विवाहार्थं सिद्धा अस्मि" इति उक्तवती । खाजी तयोः विवाहं कारयित्वा किञ्चिद्दूरं गतवान् । वृद्धः नवाबपुत्र्या सह अश्वम् आरुह्य, वृक्षं परितः एकवारं सञ्चार्य अश्वस्य पृष्ठं ताडितवान् । उत्तरक्षणे अश्वेन वेगेन धावितुम् आरब्धम् । नवाबपुत्री काञ्चित् विपत्तिं ऊहयित्वा आक्रोशं

कर्तुं मुखम् उद्घाटितवती । तत्क्षणमेव वृद्धः तस्याः मुखं स्वीयहस्तेन पीडितवान् । तदा भयात् राजकुमारी मूर्च्छां प्राप्तवती ।

किञ्चित्कालानन्तरं सा जागरिता । वृद्धः तां पश्यन् 'अहं भवत्याः विधिपूर्वकं स्वीकृतः पतिः अस्मि'' इति उक्तवान् ।

''तत् तु सत्यम् । किन्तु विवाहविच्छेदन-कारयिता खाजी कुत्र गतवान् ?'' इति पृष्ट्वा राजपुत्री भयेन परितः दृष्टवती ।

वृद्धः उच्चैः हसन् श्वेतानि श्मश्रूणि, मस्तकस्य उष्णीषं च निष्कास्य दूरे क्षिप्तवान् । तदा, सः पूर्वं अनादृतः पर्षियाराजकुमारः एव इति नवाबपुत्री ज्ञातवती ।

''तस्मिन् दिने भवती मां वञ्चितवती । तादृशीं भवतीम् अहम् अपि वञ्चनया एव परिणेष्यामि इति प्रतिज्ञां कृतवान् । सा प्रतिज्ञा इदानीं साधिता । अत्र दोषः नास्ति खलु ?'' इति राजकुमारः पृष्टवान् ।

नवाबपुत्री लज्जया मुखं परिवृत्य स्थितवती । अनेन विवाहेन सा अपि सन्तुष्टा एव अस्ति इति ज्ञात्वा राजकुमारः सन्तोषेण हसन् ''भवत्याः नामधेयं मम पृष्ठस्य उपरि अक्षयरूपेण भवत्या लेखितम् अस्ति । तत् नामधेयं द्रष्टुम् अहं न शक्नोमि । किन्तु भवत्याः नामधेयं रूपं च मम मनसि ततोऽपि दृढतया तत्पूर्वमेव भवती स्थापितवती'' इति उक्तवान् ।

नवाबपुत्री पूर्वापेक्षया अधिकं लज्जिता । मन्दं हसन्ती सा नतमस्तका भूत्वा भूमिं पश्यन्ती स्थितवती ।

अनन्तरं तौ द्वौ अपि पर्षियादेशं गत्वा एतां वार्तां पत्रे विलिख्य दूतद्वारा यरवान्नगरं प्रेषितवन्तौ । ''स्वीयपुत्री अनुरूपं पतिं प्राप्तवती । तयोः विवाहः विचित्ररूपेण जातः'' इति सर्वं वृत्तान्तं ज्ञात्वा यरवान्नवाबः अतीव सन्तुष्टः । अत्युत्साहेन सः स्वयम् एव पुनः राजभवने तयोः विवाहं सवैभवं कारितवान् ।



## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि।

### विजितां शीर्षिकां नवम्बर-८४ मासे प्रकटयिष्यामः।





❀उपरितनं चित्रद्वयं पश्यन्तु। तस्य युक्तां शीर्षिकां परस्पर-सम्बधि-वाक्यद्वयेन लिखित्वा सप्टम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्नोति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀अधोनिर्दिष्ट-सङ्केतस्य कृते शीर्षिकाः प्रेषणीयाः-

चन्दमामा (संस्कृतम्)
७३/२'अक्षरम्',रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४

---

'जुलै' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः –

प्रथमचित्रम्– अबला कथम् इह भारं वहति!
द्वितीयचित्रम्– अभ्यासेन तु निपुणा भवति।
प्रेषकः– के.जानकीराम्, टेलिकाम् ट्रेनिंग सेण्टर्, तिरुमलगिरि, सिकन्दराबाद्-१५

भवन्तः जानन्ति वा? (उत्तराणि)

१. सर् अलेक्साण्डर् ग्रहांबेल्। २. गेलिलियो। ३. थामस् आल्वा एडिसन्। ४. रैस् केल्लाग्। ५. डा॥ विलियं स्टोक्स्।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| संघट्टितवान् | Dashed | तन्द्रामग्नः | Feeling sleepy |
| प्लवमानम् | Floating | कूर्दितवान् | Jumped |
| अरण्यरोदनम् | Cry in wilderness | संभ्रमः | Agitation |
| बुभुक्षा | Hungry | लिपिकारः | Clerk |
| हस्तच्युतम् | Lost | उत्कोचः | Bribe |
| उन्मीलितवान् | Opened | ज्यौतिषिकः | Astrologer |
| परिसरः | Environment | अञ्चलम् | Saree-end |
| दूरदर्शकम् | Telescope | ऊरुभङ्गः | Breaking of the thigh |
| लुण्ठाकाः | Robbers | शाटिका | Saree |
| निलीनः: | In hiding | सूच्यग्रामिता | Point of a needle |
| उष्ट्रः | Camel | वार्धक्यम् | Old age |
| आकुञ्चन् | Contracting | विवाहविच्छेदः | Divorce |
| भ्रुकुटिः | Eyebrow | ऊहयित्वा | Having guessed |
| अन्यतमः | Another | ग्रन्थिः | Knot |
| मृगया | Hunting | उष्णीषम् | Turban |
| माण्डलिकः | Vassal king | इन्द्रजालम् | Magic |
| पत्रक्रीडा | Playing cards | चटकः | Sparrow |
| सहपाठी | Classmate | फलचयनम् | Picking fruits |
| वितानम् | Pandal | अटविकः | Forester |
| स्थालिका | Plate | शिरोघट्टनम् | Striking one's head |
| सामाजिककुरीतिः | Social evil | दंशनम् | Biting |
| उपायनम् | Presentation | तर्तुं | To cross |

# शाटिका SAREE

| | |
|---|---|
| **सुरेखा-** एषा शाटिका नूतना वा ? | Is the Saree new? |
| **अपर्णा-** न किल ? षण्मासेभ्यः पूर्वम् एव क्रीतवती अहम् । | No, I bought it six months ago. |
| **सु॰-** तथापि नूतना इव दृश्यते ! | It still appears to be new ! |
| **अ॰-** बहुवारं न धृतवती, तावदेव । | I have worn it only rarely. That is it. |
| **सु॰-** दशा तु बहु सम्यक् अस्ति । | The border is very nice. |
| **अ॰-** एतदर्थम् अहं बहु आपणान् अटितवती । | I had to look for it in many shops. |
| **सु॰-** चित्रविन्यासः सुन्दरं दृश्यते । एषा शाटिका भवत्याः युज्यते । | It is a very good design. You look grand. |
| **अ॰-** मह्यम् एतत् बहु रोचते । मदीयां श्वेतशाटिकां दृष्टवती किल ? सा इतोऽपि रोचते । | I like it very much. You must have seen my white saree. I like it much more. |
| **सु॰-** मुम्बयीतः भवत्याः अग्रजेन यत् प्रेषितं तदेव किल ? | You mean, the one your brother had sent from Bombay? |
| **अ॰-** आम, तदेव । | Yes, that is the one. |
| **सु॰-** मम समीपे अपि एका श्वेतशाटिका अस्ति । मध्ये मध्ये नक्षत्राणि अपि सन्ति । | I too have a white saree. It has stars printed on it. |
| **अ॰-** कुत्र ? प्रदर्शयतु । कदा कुत्र क्रीतवती ? | Where is it? Show it to me. Where did you buy it and when? |
| **सु॰-** गतमासे गजेन्द्रवस्त्रालये क्रीतवती । कथम् अस्ति ? | I bought it at Gajendra Vastralaya last month. |
| **अ॰-** बहु सुन्दरम् । कति रूप्यकाणि दत्तवती ? | Really very nice. What did it cost you? |
| **सु॰-** मूल्यं तु बहु अधिकम् । सार्धद्विशतं रूप्यकाणि । | Rs. 250/-. It is rather costly. |
| **अ॰-** तथापि चिन्ता नास्ति । तावत् मूल्यम् अर्हति एतत् । | No matter, it is really worth paying. |